ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

३९ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१४ ई०

प्रभारीकुलपतिः

श्रीसुखवीरसिंहसन्धू (आई. ए. एस.)

संयुक्तसचिवः

(भाषा-उच्चशिक्षाविभागः)

मानवसंसाधनविकासमन्त्रालयः, भारतसर्वकारः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोधं-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

३९ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१४ ई०






प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३९ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१४ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

सम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

सर्वे जीवा: स्वभावत: सुखमभिलषन्ति। जीवेषु नराणामुत्तमता विवेकशक्तिसम्पन्नता शास्त्रपरायणता च सुव्यक्तमस्ति। भारतीयपरम्परायां जीवनस्योद्देश्यं सर्वथा समुद्घोषितमस्ति धर्मार्थकाममोक्षसिद्धिरिति। एतत्पुरुषार्थचतुष्टयमपि कथ्यते। अनवरतं योगादिसाधनायां विद्यमानैरस्माकं पूर्वजैर्मुनिभि: कश्चन जीवनमार्ग: समुपदिष्ट: स च मार्ग: ऋषिभि: साक्षात्कृतैर्मन्त्रात्मकवेदै: प्रदर्शितोऽस्ति। तदनुसारं त्यागमूलकानां दैनिकचर्या-नित्यकर्म-नैजकर्तव्यप्रभृतीनां कर्मणां याथातथ्येन परिपालनमेव समुचितं सोपानमिति। किन्त्वधुना शारीरिकं सुखमेव सर्वस्वं मन्वाना: न केवलं सामान्या जना: अपितु शास्त्राभ्यासपरायणा अपि जना: तस्मात्तपोमयान्मार्गाद्विचलिता: सन्त: परिलक्ष्यन्ते।

तैत्तिरीयोपनिषदि स्पष्टतो निर्दिशन् आचार्य: समुपदिशति यत्- 'सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमद:। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी:। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।।1।।

अस्मिन् प्रसङ्गे आचार्य: अन्तेवासिनां भविष्यत्कालिकं जीवनं सुखमयं विधातुमेवोपदिशति। जीवने सत्यस्य कीदृशी भूमिका भवति इत्यनेनोपदेशेन ज्ञातुं शक्नुम:। प्रथमोपदेश: सत्यमेवाधिकृत्य वर्तते। ऋषि: सर्वथा जानाति यत् गृहस्थाश्रमे एवंविधा: समस्या: भविष्यन्ति यत्र सत्यस्य मार्ग: कठिनतर: भविष्यति यत्र च स्खलनस्य महती सम्भावना वर्तते। अत: सर्वप्रथमं 'सत्यं वद' इत्येवमुपदिशति। यदा मानव: सत्यशीलो भवति सङ्कटापन्नोऽपि सत्यस्य मार्गं न जहाति तदानीं स सम्यग्रूपेण धर्माचरणेऽपि प्रभवति। धर्माचरणस्य कृते स्वाध्याय: परममावश्यकमस्ति। येन ज्ञातस्य तत्त्वस्य परिरक्षणम् अज्ञातस्य च ज्ञानं जायते। वेदानामध्ययनं शास्त्राणामनुशीलनं च धर्माचरणे नितान्तमावश्यकमस्ति। अस्माकं शास्त्राणि मूलत: संस्कृतभाषायामेव सन्ति। संस्कृतस्य सम्यग् ज्ञानं तत्र च निहितं तत्त्वं सर्वै: अवश्यमेवानुशीलनीयमस्ति। अस्यामेव दिशि विद्यापीठस्यास्या: 'शोध-प्रभा' शोधपत्रिकाया: प्रकाशनं विधीयते।

शोधप्रभाया: अस्मिन्नङ्के विविधविषयविश्लेषपरा चतुर्दश लेखा: प्रकाश्यन्ते। एवं प्रतिभा-विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रिय: संवर्धनार्थमभ्यर्थये सुमनस: विदुष:।

**प्रो. रमेशकुमारपाण्डेय:**

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# चार्वाकदर्शनस्य परिशीलनम्

**प्रो. हरेरामत्रिपाठी**

**विषयप्रवेशः**

सामाजिकानुसन्धानं सामान्यतया वैज्ञानिकविधिमाश्रित्य प्रवर्तते। तत्र प्रत्यक्षरूपेण समाजस्य विविधघटनाः, प्रघटनाश्च सम्यगालोच्य तासां तर्कसङ्गतं व्यवस्थितञ्च विश्लेषणं विधाय निष्कर्षः समुपस्थाप्यते। सामाजिकानुसन्धानस्येदं वैशिष्ट्यमस्ति यत् तस्य घोषितविधेः प्रयोगं कश्चन अपि अनुसन्धानकर्त्ता कर्तुं समर्थो भवति। सिद्धान्तस्य वैधतां, नियमोपनियमानां वैधतां, विश्वसनीयतां च प्रमाणीकरोति। सामाजिकानुसन्धानस्य प्रकृतिः वैज्ञानिकविधिमवलम्ब्य प्रवृत्ता भवति। वैज्ञानिकविधेः वैशिष्ट्यं किमिति जिज्ञासायामुच्यते–

1. पद्धतेः सिद्धान्तस्य वा वस्तुनिष्ठता।
2. आनुभविकता।
3. सार्वभौमिकता।
4. सिद्धान्तनिरूपणम्।
5. विधिचररूपेण तथ्यानां गणना, प्रमाणनं, वर्गीकरणञ्च।

**पद्धतेः सिद्धान्तस्य वा वस्तुनिष्ठता**–अत्र घटना वा प्रघटना यथा विद्यते तथैव तस्य प्रस्तुतीकरणं भवति। प्राकृतिकविज्ञाने वस्तुनिष्ठत्वन्तु सम्भवत्येव यतोहि प्रयोगशालायां विविधतत्त्वानां क्रियायाः प्रक्रियायाश्च निरीक्षणं यथा क्रियते तथैव तेषां प्रस्तुतीकरणमपि भवति। प्राकृतिकतत्त्वानि संवेदनयुक्तानि न भवन्ति अपि च तेषां प्रक्रियायां किमपि प्रयोजनं न भवति। परन्तु सामाजिकविज्ञाने समाजस्य वा संस्कृतेः सर्वाः प्रघटनाः, संस्थाः, सम्बन्धभूमिकाः, पदभूमिकाः, क्रियाः, अन्तःक्रियाश्च विशेषार्थाय प्रयोजनाय च भवन्ति।

एतासां निरीक्षणं वा साक्षात्कारेण सम्यग् ज्ञातुं न शक्नुवन्ति गवेषकाः अपि तु वस्तुनिष्ठत्वमपि प्रमापयितुं न शक्यते। वस्तुनिष्ठत्वस्य विपरीतावस्था व्यक्तिनिष्ठत्वं भवति। तत्रानुसन्धानकर्त्ता स्वसंवेदनायाः योग्यतायाः विचारपरम्परायाः, स्वानुकूलप्रतिकूलस्य आदर्शस्य समावेशं करोति। एते अनुसन्धातारः साहित्यक्षेत्रे, धर्मक्षेत्रे कलाक्षेत्रे च स्वविचारं प्रस्तुतीकुर्वन्ति। विविधेषु विद्वत्सु कांश्चन सिद्धान्तानवलम्ब्य विचारकरणं, विमर्शकरणञ्च समाजस्य विविधविचाराणां तथ्यानाञ्च पारस्परिकविसङ्गतीनाञ्च परस्परं

संतुल्य तर्कवितर्कयो: सङ्गतिं कृत्वा निष्कर्ष: उपस्थाप्यते तदेव अन्तर्वैयक्तिकत्वमिति शब्देन (Inter Subjectivity) कथ्यते।

एवं दार्शनिकानुसन्धानमपि भवति तत्र एकस्य ऋषे: मतं स्वीकृत्य तत्र प्रवर्तितायां धारायां ये विचारा: सन्ति तान् स्वीकृत्य नूतनरीत्या विश्लेषणमध्ययनं वा क्रियते। तत्रैव पश्यन्तु भवन्त: यदास्तिकनास्तिकभेदेन भारतीयदर्शनं द्विविधं वर्तते। "नास्तिको वेदनिन्दक:" इति स्मृतिवचनमवलम्ब्य चार्वाकजैनबौद्धा: नास्तिका: सन्तीति विद्वांस: वदन्ति।

सम्प्रति चार्वाकसिद्धान्तमवलम्ब्य किञ्चिदुपस्थापयामि। लोकायतम्, चार्वाक:, बार्हस्पत्यञ्चेति नामभि: प्रसिद्धं भौतिकदर्शनमतिप्राचीनविचारधाराया: स्वरूपं वर्तते। श्वेताश्वतरोपनिषदि अनेकानि नास्तिकमतानि सन्ति। तेषु मुख्यं लोकायतमतं विद्यते। कौटिल्यस्य अर्थशास्त्रे सांख्ययोगाभ्यां सह लोका[1]यतदर्शनस्य विवरणमप्यस्ति।[2] राइस् डेविड्साख्य: पाश्चात्यविद्वान् त्रिपिटकस्य अनेकानंशान् संगृहीतवान्, येषु लोकायतस्य मतं विद्यते। बुद्धघोषेन लोकायतं वितण्डावादसत्थमिति कथ्यते। 'स्वपक्षस्थापनाहीनो वितण्डा"[3] तत्र स्वपक्षस्योपस्थापनं न भवति अथ च छलपूर्वकं परमतस्य खण्डनं क्रियते। वितण्डायां काचित् प्रतिज्ञा न भवति, अपितु प्रतिपक्षिण: प्रतिज्ञामालोच्य स्वपक्षोपस्थापनं विना तत्खण्डनं क्रियते। चार्वाकशब्दस्य व्युत्पत्तिस्तु "चारु मनोहारिणी वाक् वाणी यस्य स च चार्वाक:"[4] इति। लोके वा साधारणजनेषु प्रचलितत्वादस्य नाम लोकायतमिति। अथवा लोकजीवनमाश्रितत्वाच्च। लोकायतशब्दस्य अन्या अपि व्युत्पत्तिरस्ति। आयतन्ति उत्सहन्ति वायमन्ति वादस्सदेनाति अर्थात् ते वादा: आनन्दाय प्रयतन्ते। अथवा जगत् तेभ्य: कञ्चित् प्रयत्नं न करोति। पतञ्जलिना महाभाष्ये उक्तम्–

"वर्णिका भागुरी लोकायतस्य" इत्यनेन प्रतीयते भागुरी नामिका टीका काचन लोकायतसूत्रस्य आसीत् सा इदानीं नोपलभ्यते।

प्रबोधचन्द्रोदयनाटकस्य द्वितीयाङ्के उक्तम्–

**"वाचस्पतिना प्रणीय चार्वाकाय समर्पितम्।[5] तेन च शिष्योपशिष्यद्वारेण बहुलीकृतम् तन्त्रम्"** अत्र वाचस्पतिस्तु बृहस्पते: वाचको वर्तते। शान्तरक्षितविरचिततत्त्वसंग्रहे पुरन्दरस्योल्लेखो विद्यते। स चानुमानप्रमाणस्य व्यावहारिकसत्तां न स्वीकरोति। अत एव प्रबुद्ध: चार्वाक: इति कथ्यते। जयराशिभट्टविरचिततत्त्वोपप्लवसिंह: अनुमानादीनि प्रमाणानि खण्डयति प्रत्यक्षलक्षणस्यापि खण्डनञ्च करोति। स च चार्वाक: इति केचन विद्वांस: मन्यन्ते। स्वतन्त्रविचारपद्धतिरूपेण चार्वाकदर्शनस्य

1. सांख्यं योग: लोकायतं चेत्यान्वीक्षिकी–कौटिल्यार्थशास्त्रम् उपोद्घात।
2. बुद्ध के संवाद ग्रन्थ 1. पृ. 166 संग्राहक- राइट् डेविड्स।
3. न्यायसूत्रम् अ. आ. सूत्रम्
4. भारतीय दर्शन का इतिहास भाग 3, पृ. 404 (एस.एन. दास गुप्त)
4. प्रवोधचन्द्रोदयनाटकम् अङ्क 2
5. षड्दर्शनसम्मुच्चयप्रकरणम् लोकायतिकम्।

संक्षिप्तपरिचयो हरिभद्रसूरिकृतषड्दर्शनसमुच्चये[1] उपलभ्यते। तदनन्तरं चतुर्दशशताब्द्यां माधवाचार्येण सर्वदर्शनसंग्रहे चावार्कदर्शनस्य संक्षिप्तं स्वरूपं निरूपितम्। चार्वाकमतस्य केचन सिद्धान्ताः प्राचीनसंस्कृतवाङ्मये उपलभ्यन्ते। ऋग्वेदे इन्द्रस्य सत्तायां ये संशयं कुर्वन्ति ते अपव्रताः सन्ति। आस्तिकाः व्रतिनः सभ्याः, यज्ञविहीनाः अव्रतिनः निन्द्याः इति। इत्यनेन अपव्रतः चार्वाकवाचकः इति प्रतिभाति। कठोपनिषदि उक्तम्–"न सा[7]म्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढ़म्।

अयं लोको नास्ति पर इतिमानी पुनः पुनर्वशमापद्यते मे।

अर्थात्–वित्तस्य मोहेन मूढ़ाः बालबुद्धयः, प्रमादिनः परलोकं न स्वीकुर्वन्ति, ते मम वशे आगच्छन्ति इति यमः वदति। वाल्मीकिरामायणं संस्कृतसाहित्यस्यादिमहाकाव्यमस्ति। महाभारतापेक्षया प्राचीनतममिति तत्र अयोध्याकाण्डे जाबालि[2]ब्राह्मणः रामं प्रति कथयति, हे मनुष्यश्रेष्ठराम! पितुः राज्यं परित्यज्य कङ्टकयुक्तः मार्गः न सम्यगस्ति। अयोध्याराज्यस्य भोगं कुर्वन् तत्रैव विहर यथा स्वर्गे इन्द्रो विहरति। यत्र सर्वे गच्छन्ति तत्रैव तव पिता अगच्छत्। ये जनाः सर्वदा धर्मं चिन्तयन्ति दुःखञ्च स्वीकुर्वन्ति ते तु न सामीचीनाः सन्ति। पितुः श्राद्धेन न किमपि भवति अपि तु अन्नस्यैवापव्ययो भवति। परलोकः नास्ति इति मत्वा परोक्षं परित्यज्य लौकिकसुखम् अनुभवत्विति इत्यनेन चार्वाकस्यैव मतमुपलभ्यत इति। महाभारतस्य शान्तिपर्वणि "मोक्षधर्मपर्वाख्येऽध्याये[3] भारद्वाजस्य भृगुना ऋषिणा सह संवादः प्रचलति। तत्र भरद्वाजो वदति यदि वायुरेव शरीरं धारयति शरीरे यत्नं कारयति च तदा वायुरेव चैतन्यमिति। शरीरे उष्णत्वं वह्नेः अंशः तदा शरीरे जीवस्य सत्तास्वीकारे न किमपि प्रमाणम्। एवं रीत्या पाञ्चभौतिकशरीरातिरिक्तः जीवो नास्ति इति अनेन रूपेण चार्वाकमतस्य वर्णनं विद्यते।

हरिभद्रसूरिकृतषड्दर्शनसमुच्चये लोकायतिकस्य वा चार्वाकस्य मतं विद्यते। तत्र सूरिणा उक्तम्–

लोकायतमते कश्चन देवः सर्वज्ञत्वादिगुणयुक्तो नास्ति। मोक्षस्य, धर्मस्य, अधर्मस्य च भेदो नास्ति। प्रत्यक्षेणैव यद् गृह्यते तदेव जगदिति चिन्त्यते।

## चार्वाकस्य तत्त्वमीमांसा

चार्वाकमते पृथिवी, जलं, तेजः वायुश्चेति चत्वारि तत्त्वानि[4] भवन्ति। प्रत्यक्षप्रमाणमेवात्र वर्तत इति स्वीकृतत्वादाकाशस्य निरूपितत्वादत्राकाशतत्त्वमेव नास्ति। यथा किण्वादिभ्यः मादकद्रव्यस्योत्पत्तिर्जायते तथैव पृथिवी, जलं, तेजः, वायुश्चेति तत्त्वानां परस्परसम्मिश्रणेन चैतन्यमुपजायते। यदा शरीरस्य विनाशो जायते तदा चैतन्यमपि स्वयं विनश्यति। अत्र श्रुतिरपि प्रमाणं वर्तते। "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, स न प्रेत्य संज्ञास्तीति[5]" तथाचैतस्मिन् मते चैतन्यविशिष्टदेह

1. कठोपनिषद् 1/2/6
2. रामायणम् अयोध्याकाण्ड 100/7,8, 11, 12–14, 16
3. महाभारतम् शान्तिपर्व (मोक्षधर्मपर्व) अध्याय 186, 1–3, 8–12
4. सर्वदर्शनसंग्रहः, पृ. 4
5. बृह. उपनि. 2/4/12

एवात्मा। सुरायाः प्रकृतिभूतो वृक्षविशेषनिर्यासः किण्वः इति। यथोक्तम्–

**जडभूतविकारेषु चैतन्यं यत्तु दृश्यते।**
**ताम्बूलपूगचूर्णानां योगाद्राग इवोत्थितम्[1]।।**

स्त्र्यादीनामालिङ्गनेन यज्जन्यं भवति तदेव सुखं पुरुषार्थो भवति। यद्यप्यत्र दुःखमपि विद्यते तर्हि तत्सुखं त्याज्यमित्यपि वक्तुं न शक्यते यथा मत्स्यार्थी सशल्कान् सकष्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते। यथा धन्यार्थी सपलालानि धान्यानि आहरति, स यावदादेयं तावदादाय निवर्तते इति माधवाचार्यः निगदति[2]। दुःखस्य सम्मिश्रितत्वादनुकूलवेदनीयत्वस्वरूपं सुखं न त्याज्यमिति।

अत एव सर्वदर्शनसङ्ग्रहे उक्तम्–

**त्याज्यं सुखं विषयसङ्गमजन्म पुंसा[3]**
**दुःखोपसृष्टमिति मूर्खविचारणैषा।**
**ब्रीहीन् जिहासति सितोत्तमतण्डुलाण्ढ्यान्,**
**को नाम भोस्तुषकणोपहितान्हितार्थी।।**

यद्यपि लौकिकसुखेषु दुःखानां सम्मिश्रणत्वमुपलभ्यते। अत एव वैदिकसुखमेव पुरुषार्थः तत्र स्वर्गादिकमनुकूलवेदनात्वरूपेण सुखस्वरूपमिति। यतोहि–

**यन्न दुःखेन सम्भिन्नं न ग्रस्तमनन्तरम्।**
**अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्।।**[4] इति।।

अत्र चार्वाकाः वदन्ति– वेदप्रतिपादितसुखेषु अविशुद्धिक्षयातिशयदोषाः सन्ति अथ चानृतव्याघात–पुनरुक्तदोषारपि भवन्ति इति। यथा पुत्रेष्टियागे कृते सत्यपि पुत्रस्याभावः वेदस्याप्रमाण्यं दर्शयति। 'ओषधे त्रायस्वैनम्[5]" "स्वधिते मैनं हिंसीः[6]" "अन्नं ब्रह्मेति व्यजनात्[7]" "प्राणो [8]ब्रह्मेति व्यजनात्" इत्यादिवाक्यार्थेषु अनृतत्वं प्रतीयते "उदिते जुहोति"[9] "एक एव रुद्रो न द्वितीयोऽवतस्थे[10] "सहस्राणि [11]सहस्रशो ये रुद्रा अधि भूम्याम्" "एकमेवाद्वितीयम्[12]" "द्वा सुपर्णा सयुजा[13]"

---

1. स.सि.सं. 2/7
2. सर्वदर्शनसङ्ग्रहः पृ. 5
3. तदेव पृ. 6
4. सांख्यतत्त्वकौमुदी
5. तै.सं. 1/2/1
6. तै.सं. 1/2/1
7. तैतिरीय उ. 3/2
8. तै.उप./3/3
9. तै.ब्रा. 5/5/5
10. तै. 1/8/6
11. तै.सं. 4/5/11
12. छा. 6/2/1
13. मु. 3/1/1

"ऋतं पिबन्तौ[1]" चेत्यादीनि वाक्यानि परस्परं विरुद्धानि सन्ति। परस्परविरुद्धार्थकत्वाद्व्याघातदोषः आपतति। 'आपः उन्दन्तु[2]' इत्यादीनि वाक्यानि पुनरुक्तानि सन्तीति पुनरुक्तदोषश्चापतति। अत एव गौतमैरुक्तम्– "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः[3]" इति एतेन वेदानामप्रामाण्यं चार्वाकैः निरुपितम्। अत एव माधवाचार्यैरुक्तम्–

"अनृत व्याघात–पुनरुक्तदोषैः दूषिततया वैदिकम्मन्यैरेव धूर्तबकैः परस्परं कर्मकाण्डप्रामाण्यवादिभिः ज्ञानकाण्डस्य, ज्ञानकाण्डप्रामाण्यवादिभिः कर्मकाण्डस्य च प्रतिक्षिप्तत्वेन, त्रय्या धूर्तप्रलापमात्रत्वेन अग्निहोत्रादेः जीविकामात्रप्रयोजनत्वात्। तथाच आभाणकः

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः।।[4]

अत्र कण्टकादिजन्यं दुखमेव नरकपदवाच्यं भवति। लोके यः नृपो भवति स च परमेश्वरः तदतिरिक्तः परमेश्वरो न भवति। स्थूलोऽहं कृशोऽहं, कृष्णोऽहं चेत्याद्यनुभवात् शरीरमेवात्मा। "मम शरीरम्" इत्यनुभवस्तु 'राहोः शिरः' इतिवत् भवति। अत एव चार्वाकानुयायिनो वदन्ति यत्–

अङ्गनालिङ्गनाज्जन्यसुखमेव पुमर्थता।
कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते।।[5]

लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते।।[6]

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।।[7]

किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः।।[8]

देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी।।[9]

---

1. का. 3/1
2. तै.सं. 1/2/1
3. न्यायसूत्रम् अ. 2, प्र.भाग सू. 57
4. सर्वदर्शनसंग्रहे चा. पृ. 6
5. तदेव चा. पृ. 9 पं. 3
6. तदेव पृ. 9 पं. 5
7. तदेव पृ. 9 पं. 7
8. स.द.सं.चा.पृ. 9 पं. 9
9. स.द.सं.चा. पृ. 9 पं. 11

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥[1]

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिताः॥[2]

पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥[3]

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिखाम्॥[4]

गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम्।
गेहस्थकृतश्राद्धेन पथि तृप्तिरवारिता॥[5]

स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते॥[6]

यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥[7]

यदि गच्छेत्परं लोकं देहादेष विनिर्गतः।
कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः॥[8]

त्रयो वेदस्य कर्त्तारो भण्डधूर्तनिशाचराः।
जर्भरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥[9]

अनेन रूपेण सनातनधर्मस्य वेदानाञ्चाप्रामाण्यं दर्शयन्ति चार्वाकानुयायिनः तदसत्। यतोहि चार्वाकमतस्वीकारे लोकव्यवहारस्य आचारादीनाञ्च लोपो भविष्यति अथ च सामाजिकव्यवस्थायाः विघटनञ्च भविष्यतीति यतोहि भारतीयसंस्कृतेः मूलं वेदाः सन्ति तेषामप्रामाण्यं कथमपि प्रतिपादयितुं न शक्यते। ईश्वरोच्चरितत्वादाप्तप्रामाण्याच्च तेषां प्रामाण्यमनादिकालतः वर्तत इति चार्वाकदर्शनं केन प्रकारेणानुमानस्याप्रामाण्यं स्वीकरोतीत्यग्रिमनिबन्धे प्रतिपादयिष्यामि।

---

1. तदेव पृ. 20 पं. 15
2. तदेव पृ 20 पं. 17
3 तदेव पृ. 20 पं. 19
4 तदेव पृ. 20 पं. 21
5 तदेव पृ. 21. पं. 2
6 तदेव पृ. 21 पं. 4
7 तदेव पृ. 21 पं. 6
8 सर्वद. चा. पृ. 21 पं. 8
9 तदेव पृ. 21 पं. 20

# श्रीमद्भगवद्गीतायां योगविमर्शः

डॉ. संगीता खन्ना

श्रीमद्भगवद्गीतायां योगविमर्शः" इति महत्त्वपूर्णविषयोऽस्ति सर्वोपयोगित्वात् सर्वज्ञेयत्वादिति। योगमाहात्म्यादेव गीता योगशास्त्रमित्यभिधीयते, यस्याः प्रत्येकमाध्यायस्य पुष्पिकायां "ब्रह्मविद्यायां योगशास्त्रे" इत्युक्तम्।

गीतायां 'युजिर्योगे' इति धातोः निष्पन्नोऽयं योगशब्दः सम्बन्धवाचकः। आत्मपरमात्मनोः ऐक्यस्य सम्बन्धस्य जीवेश्वरयोः समन्वयस्य वा सिद्धान्त एव योगः तत्र मुख्यरूपेण वर्णितः। यद्यपि योगपदस्य बहुविधप्रयोगः गीतायां दृश्यते किन्तु स्वाध्यायपरिपन्थिप्रयोगः सर्वथा हि सः। योगपदश्रवणेन सद्यः पातञ्जलयोगः स्मृतिपथि आयाति, सोऽपि गीतायामभ्यर्हितः। पातञ्जलयोगे योगशब्दः "युज् समाधौ" इत्यस्माद् धातोः निष्पन्नः समाधिवाचकोऽस्ति। पुरुषस्य स्वरूपावस्थितिः लक्ष्याऽत्र, न तु जीवपरमात्मनोरैक्यम् इति। "योगः समाधिः" इति व्यासवचनम्[1]। चित्तवृत्तिनिरोधलक्षणो योगः सार्वभौमचित्तस्य धर्मः, तदङ्गं तु समाधिः न एवंभूतः। "योगः समाधिः" इति व्युत्पत्तिनिमित्तमात्राभिधानमङ्गाङ्गिनोरभेदविवक्षामात्रेण कृतम्, आयुर्वैघृतमितिवत्। प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एव। पातञ्जलयोगशास्त्रे "योगः" साध्यरूपेण अष्टावङ्गेषु परिगणितः, "समाधिः" साधनरूपेण विवेचितः इत्यत्र न विमतिः।

गीतायां वर्णितः योगः पतञ्जलिप्रोक्तयोगात् सर्वथा भिन्नः। गीतायां "समत्वं योग उच्यते" एवं "योगः कर्मसु कौशलम्" इत्येवंरूपेण योगः परिभाषितः।

द्वितीयेऽध्याये भगवता उक्तम्–

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्॥**[2]

तत्र शांकरभाष्येऽन्यासु टीकासु च स्पष्टीकृतं यत् कर्तृत्वाभिमानं त्यक्त्वा ईश्वरार्थं ज्ञानार्थं वा फलतृष्णाशून्येन कर्माणि कुरु। एवं सति कर्मफलरूपेण प्राप्तयोः सिद्ध्यसिद्ध्योः हर्षं विषादञ्च

---

1. योगसूत्रं व्यासभाष्यम् 1.1.1.
2. श्रीमद्भगवद्गीता 2.48 ,50

त्यक्त्वा समो भव। इदमेव समत्वं "योग" इति उच्यते। समत्वबुद्धियुक्तः सन् जनः सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण पुण्यपापयोः बन्धयोः हेतू सुकृतदुष्कृते त्यजति। समत्वबुद्धिः पुरुषः भगवदनुकम्पया स्वयं तत्त्वं साक्षात्करोति।

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।।**[1]

स्वधर्माख्येषु कर्मसु वर्तमानस्य समत्वबुद्धेः ईश्वरार्पितचेतसः बन्धनस्वभावान्यपि कर्माणि, स्वभावान्निवर्तन्ते, एतदेव महत् कौशलं तेषां बन्धकानां कर्मणां मोक्षपरत्वसम्पादनचातुर्यं कौशलमिति स एव योग इति 'योगः कर्मसु कौशलम्'।

ब्रह्मप्राप्त्यर्थं भगवत्प्रपत्त्यर्थं वा कर्मज्ञानभक्तिरूपाणि त्रीणि साधनानि समानानि उक्तानि, भगवद्वचनमिदम्–

**मार्गास्त्रयो मया प्रोक्ता नृणां श्रेयो विधत्सया।**
**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कश्चित्।।**

आत्मदर्शनलाभेऽधिकारिभेदेन उपायविकल्पाः – ध्यानयोगः सांख्ययोगः (ज्ञानयोगः) कर्मयोगश्चेति श्रवणयोगश्चापि स्मर्यते –

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे।।**

अग्रेऽपि–

**अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः।।**[2]

सर्वशास्त्रमयी गीता भक्तिज्ञानकर्मणां त्रिवेण्यस्ति। त्रयाणां सम्यक् समन्वयेन विशिष्टेयम्। स्वयं भगवान् कथयति–

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः।।**[3]

ईश्वरभजने इतिकर्तव्यताकथनमिदम्, अस्तु, मन्मना इत्यनेन ज्ञानयोगः, मद्भक्तो अत्र भक्तियोगः, मद्याजी इत्यनेन कर्मयोगः उक्तः। भगवता सह योगं कृत्वा तत्र समाहितो वा भूत्वा योगी सर्वथामृतमश्नुते। समन्वयस्य दृष्टान्तोऽयम्। तथापि योगत्रयं पृथग्रूपेण दर्शनीयम्।

---

1. श्रीमद्भगवद्गीता 4.38
2. श्रीमद्भगवद्गीता 13.24,25
3. श्रीमद्भगवद्गीता 9.34

**कर्मयोगः** – कर्मणा परमात्मनः साक्षात्कारः, जीवपरमात्मनोः योगः कर्मयोगः कथ्यते। कर्ममार्गावलम्बिना कथ्यते– गीतायाः मुख्यप्रतिपाद्योऽयम्। दृश्यं युद्धक्षेत्रे मोहाविष्टः कर्मच्युतः अर्जुनः समुपस्थितः। येन केनापि प्रकारेण क्षात्रकर्मणि युद्धे तस्य प्रवृत्तिः न जायते। विषमस्थितिः तत्र, युद्धस्तु अनिवार्यः, योद्धा युद्धविरतः किंकर्तव्यविमूढो सन् स्थितः। तदा योगी कुशलनायकः श्रीकृष्णः तं कर्मयोगमुपदिशति। तेनापगतमोहः अर्जुनः समाहितचित्तो स्वकर्मणि प्रवर्तते–

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥**[1]

स्पष्टमिदं यदर्जुनं प्रत्युपदिष्टः कर्मयोगः सर्वेषां कृतेऽस्ति। अद्य तु किं वा सर्वस्मिन् काले तस्योपयोगित्वमक्षुण्णम्। भगवता उक्तम् "गहना कर्मणो गतिः" तथापि कर्म कर्त्तव्यमेव। कथं कर्त्तव्यमिति ज्ञातव्यम्। अतः इतिकर्त्तव्यता कथिता त्रिलोकनाथेन श्रीकृष्णेन।

कर्मयोगी सोऽस्ति यः कर्तृत्वाभिमानरहितः सन् कर्म करोति यतो हि कस्यापि कार्यस्य सम्पादने अधिष्ठानकर्तृकरणचेष्टादैवानां हेतुत्वं भवति–

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥**[2]

अज्ञानवशेन पुरुषः ''अहं कर्ता'' इति मन्यमानः कर्म करोति। एष कर्तृत्वाभिमानं न कुर्यात्। यतो हि–

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।**
**अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥**[3]

कर्मयोगी सोऽस्ति यः अनासक्तभावेन कर्म करोति। सामान्यतः सुखप्राप्त्यर्थं दुःखनिवारणार्थं कर्मणि प्रवृत्तिः जायते। इयमेव कर्मासक्तिः बन्धजनिका, सा तु त्याज्या। प्रकारान्तरेण कथ्यते - सकामकर्म बन्धकं भवति एवं निष्कामकर्म अनासक्तकर्म वा बन्धोच्छेदकं भवति, दग्धबीजवद् अस्मिन् फलोत्पादिका शक्तिः न भवति। अतः निष्कामकर्म एव कर्मयोगः। अस्य मुख्यतः अङ्गद्वयं स्मरणीयम् - कर्तृत्वाभिमानत्यागः फलाशात्यागश्च। भगवच्छ्रीमुखेन स्पष्टमुक्तम् -

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोस्त्वकर्मणि॥**[4]

---

1. श्रीमद्भगवद्गीता 18.73
2. श्रीमद्भगवद्गीता 18.143
3. श्रीमद्भगवद्गीता 3.27
4. श्रीमद्भगवद्गीता 2.47

अत्र चतुर्थपादे निर्दिष्टम् – "मा ते सङ्गोऽस्त्वकर्मणि"। भगवान् जानाति यत् यथोक्तं निष्कामकर्म सामान्यजनस्य कृते कठिनम्। यत्र न कर्तृत्वाधिकारः न भोगाधिकारः, तत्र प्रवृत्तिः कथमिति। निष्प्रयोजनं कर्म किमर्थं? कथं करणीयमिति कृत्वा कर्म एव त्याज्यम् इति मतिर्जायते। तदर्थं भगवता उक्तम्–"मा ते सङ्गोस्त्वकर्मणि"। समाधानमपि दत्तं यद् भगवदर्थं कर्म कुर्यात्।

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः।।**[1]

निष्कामकर्म नाम कर्मफलत्यागः न तु कर्मत्यागः। कर्मत्यागस्तु न सम्भवः। स्पष्टमुक्तं गीतायाम्–

**नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः।।**[2]

इदमपि उक्तं यत् प्रयत्नतः पालनीयः। गीतोपदिशति–

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।।**[3]

अर्थात् द्वन्द्वविनिर्मुक्तो भूत्वा कर्म कुर्यात्। कर्मयोगिनः कृते स्वकर्म एव स्वधर्मोऽस्ति–स्वकर्मसूत्रग्रथितो हि लोकः। वस्तुतः निष्कामकर्म ईश्वरार्थकर्म विद्यते, लोकसंग्रहार्थं करणीयञ्च तत्। अनासक्तभावेन कर्म कुर्वाणोऽपि जनः कर्मलिप्तो न भवति यथा अम्भसि स्थितं कमलदलम्। उक्तञ्च–

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।।**[4]

आस्मिन्सन्दर्भेऽस्माकं श्रद्धास्पदाः सन्ति अनेके महर्षयः राजर्षयश्च, यथा राजर्षिजनकैः निष्कामकर्मद्वारा सिद्धिरवाप्ता–

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि।।**[5]

---

1. श्रीमद्भगवद्गीता 3.30
2. श्रीमद्भगवद्गीता 3.5
3. श्रीमद्भगवद्गीता 2.38
4. श्रीमद्भगवद्गीता 5.10
5. श्रीमद्भगवद्गीता 3.20

निष्कामकर्मणः फलानि – सिद्धिलाभो, ब्रह्मप्राप्तिः, मोश्चेति कथितानि–

**स्वे स्वे कर्मण्यभिरतः संसद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥**[1]

अपि च

**तस्मादसक्तः सततं कार्यं कर्म समाचर।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पुरुषः॥**[2]

निष्कामकर्मण्यपि कदाचित् कर्मसंन्यासस्य अथवा सकामकर्मणः बुद्धिर्जायते, किन्तु ईश्वरार्पितचेतः विघ्नविनिर्मुक्तो भवति, तत्र मोक्षलाभः सुनिश्चितो भवति। एवं कर्मणा सह भक्तिः अनुमोदिता–

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥**[3]

ज्ञानेन सदृशं पवित्रमिह न विद्यते इदन्तु सत्यम्। ज्ञानेन मुक्तिः मिलति किन्तु कर्मणापि मुक्तिः भवति, अत्र न कोऽपि सन्देहः। यथोक्तकर्मणा न तु घोरकर्मणा इति ध्येयम्। ज्ञानमार्गे कर्मयोगे वा स्थितो भूत्वा समानफलमवाप्तुं शक्यते –

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥**[4]

**ज्ञानयोगः**

ज्ञानयोगः ईश्वरेण सह ऐक्यभावस्य आध्यात्मिकः मार्गोऽस्ति। ज्ञानयोगी आत्मानं परमात्मनोऽभिन्नमिति मन्यते तद्भिन्नं किमपि वस्तु नास्ति। श्रीशंकराचार्यैः गीता ज्ञानयोगस्य प्रतिपादिकेति मन्यते। ते निवृत्तिमार्गिणः, अतः गीतायाः निवृत्तिपरकव्याख्यां कुर्वन्ति। तन्मतानुसारेण निवृत्तिमार्ग एव यथार्थः, यस्यापरं नाम "कर्मन्यास" इति। तत्र कर्मत्याग एव आदर्शः। "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इति सिद्धान्तावलम्बिनः 'ब्रह्मज्ञाने एव सर्वाः क्रियाः पर्यवसिताः' इति मन्यमानाः कर्मत्यागं कुर्वन्ति ते समदर्शिनः सर्वत्र ब्रह्मरूपं पश्यन्ति ब्रह्मभावापन्नाः भवन्ति–

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥**

---

1. श्रीमद्भगवद्गीता 18.45
2. श्रीमद्भगवद्गीता 3.19
3 श्रीमद्भगवद्गीता 18.66
4. श्रीमद्भगवद्गीता 5.4

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः॥[1]

अतः ज्ञानयोगस्य विशेषतारूपेण समत्वयोगः गीतायां बारम्बारं वर्णितः। समत्वयोगस्य त्रीणि रूपाणि – आत्मगतसमत्वं वस्तुगतसमत्वं गुणातीतसमत्वञ्च सन्ति। आत्मगतसमत्वं नाम "स्थितप्रज्ञ" इति। "स्थितप्रज्ञ" इति गीतायामेव उक्तं प्रथमं, नान्यत्र। यस्यार्थोऽस्ति–यस्य बुद्धिः स्थिराऽस्तु।

श्रीकृष्णार्जुनसंवादे अर्जुनः उपदेशक्रमे प्रश्नबीजं प्रतिलभ्य पृच्छति–

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्॥[2]

तदा भगवच्छ्रीमुखात् विस्तरेण स्थितप्रज्ञस्य यानि यानि लक्षणानि प्रस्फुरितानि तानि सर्वाणि अक्षरशः ध्येयानि सन्ति–

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥[3]

अर्थात् सर्वकामपरित्यागी, आत्मतुष्टः बाह्यलाभनिरपेक्षः अनुद्विग्नमनाः, विगततृष्णः विगतरागः अनभिस्नेहः स्थितधीः, स्थितप्रज्ञः मुनिश्च संन्यासी भवति। एवं स्थितप्रज्ञसम्बन्धे बहूक्तम् अध्यायपरिसमाप्तिपर्यन्तम्।

अनुकूलप्रतिकूलयोः, मित्रशत्र्वोः समभावः एव वस्तुगतसमत्वं मन्यते। वस्तूनि लक्ष्यीकृत्य समभावेन व्यवहारोऽत्र अभिमतः।

गुणातीतसमत्वं नाम सुखदुःखातीतावस्था। उपलब्ध्यनुपब्ध्योः समभावेन स्थितिः भाव्या। सर्वकर्मपरित्यागी, उदासीनः गुणातीतो भवति स चैवं लक्षीकृतः–

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते॥[4]

---

1. श्रीमद्भगवद्गीता 5.18,19
2. श्रीमद्भगवद्गीता 2.54
3. श्रीमद्भगवद्गीता 2.55,56,57
4. श्रीमद्भगवद्गीता 14.25

इदं समत्वदर्शनमेकत्वदर्शनमेव ज्ञानयोगस्य स्वरूपमस्ति। ज्ञानी आत्मानं सर्वत्र सर्वञ्च आत्मनि पश्यति। परमात्मना सह अभिन्नभावेन स्थितः ज्ञानयोगी समदर्शी भवति–

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः।।[23]

एतादृशः ब्रह्मभूतयोगी योगयुक्तात्मा उच्यते। ब्रह्मभूतः सन् सः सम्पूर्णां सृष्टिं ब्रह्ममयीमिति जानाति। तस्य आत्मैकत्वदर्शिनः न परोक्षो ईश्वरः न च स सम्यग्दर्शी वासुदेवस्य भगवतः कृते परोक्षो भवति।

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।।[24]

एवं तत्त्वज्ञानिनः विषमभावः सर्वथा नष्टः जातः। यस्मिन् क्षणे सः भूतानां पृथक्त्वम् एकस्मिन् परमात्मनि एवञ्च ततः एव भूतानां विस्तारं विकासं पश्यति, तस्मिन्नेव क्षणे ब्रह्मैव भवति। "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः।।

गीतायाम् उक्तम्–

यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा।।[25]

ज्ञानयोगविषये ब्रह्मनिर्वाणविषये ब्रह्माधिगतिविषये बहूक्तं गीतायामत्रालमतिविस्तरेण।

### भक्तियोगः

भक्त्या सेवया वा भगवत्सायुज्यं नाम भक्तियोगः। श्रीरामानुजप्रभृतिभिः आचार्यैः भक्तियोगः श्रेष्ठ इति मन्यते। तन्मतानुसारेण गीतायाः उपक्रमः उपसंहारश्च भक्तियोगेन कृतः। श्रीकृष्णोपदेशस्यारम्भ एव तदा, यदा मोहग्रस्तः किंकर्तव्यविमूढः अर्जुनः श्रीकृष्णशरणं गच्छति मार्गदर्शनार्थम्। अर्जुनः प्रार्थयति–

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्।।[26]

एवमेव गीतायाः उपसंहारभागे श्रीकृष्णः अर्जुनमुवाच –

---

23. श्रीमद्भगवद्गीता 6.29
24. श्रीमद्भगवद्गीता 6.30
25. श्रीमद्भगवद्गीता 13.31
26. श्रीमद्भगवद्गीता 2.7

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।[1]

एवं उपक्रमोपसंहारयोः शरणागतिः दृष्टा। अनेन भाव्यते यत् गीतायां भक्तियोगस्य प्राधान्यमस्ति। भक्तियोगे अनन्यभावः मुख्यो भवति। परमपरमात्मनोऽतिरिक्तस्य कस्यापि अन्यस्य मनसि न स्यात्, स एव अनन्यभावः। येन परमात्मनः प्राप्तिः भवति। उक्तम्–

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्।।[2]

सर्वाधारस्य सर्वशक्तिमतः परमेश्वरस्य समर्पितभावेन स्मरणमेव अनन्यभक्तिः अनन्यभक्तश्च योगीति स्वयं भगवता उक्तम् –

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः।।[3]

अनन्यभक्तिरेव अनन्यचित्तमुक्तं गीतायाम्। अनन्यचित्तेन सह भगवन्तं प्रति शरणागतेः भावना अपि भक्तियोगे आवश्यकी। शरणागतस्य रक्षणन्तु भगवान् करोत्येव। तथाहि–

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।[4]

अतः भगवान् कथयति–

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।

पुनः भक्तः पृच्छति तदा भगवता कथ्यते–

यत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव।।[5]
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।[6]

श्रीरामानुजाचार्यः मनुते यद् भक्तिः ईश्वरं प्रति अनुरक्तिरिति, या सप्तभिः साधनैः लभ्या। तानि

---

1. श्रीमद्भगवद्गीता 18.66
2. श्रीमद्भगवद्गीता 8.22
3. श्रीमद्भगवद्गीता 8.14
4. श्रीमद्भगवद्गीता 11.54
5. श्रीमद्भगवद्गीता 11.55
6. श्रीमद्भगवद्गीता 18.66

साधनानि सन्ति – विवेकः[1] विमोकः[2] अभ्यासः[3] क्रिया[4] कल्याणम्[5] अनवसादः[6] अनुद्धर्षश्च।[7] एतत्साधनसम्पन्नः जीवः नित्यं भगवन्तं ध्यात्वा भक्तिं लभते। श्रीरामानुजाचार्यः प्रपत्तेः पोषकः। प्रपत्तिः नाम अहंकाररहितः शरणागतिभावः। अहंकारनाशः ज्ञानद्वारा सम्भवः। भक्तस्य उद्धारस्तु भगवता एव, स्वयं श्रीकृष्णः कथयति–

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥[8]

इति भक्तियोगः

ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥[9]
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्॥

श्रीमद्भगवद्गीतास्थयोगवर्णनं सुलभमप्यवगतये वाचामगोचरमेव। अतएव भगवत्प्रसादस्यैव योगगम्यत्वमिति मनन् योगविमर्शमुपसंहरामि।

---

1. विवेकः दुष्टाहारात्सात्विकाहाराणां विवेचनं विवेकः। (जात्याश्रयनिमित्तादुदुष्टादन्नात् कायशुद्धिः विवेकः)
2. विमोकः कामानभिष्वङ्गः कायविरत इति।
3. अभ्यासः आरम्भणसंशीलनं पुनः पुनः अभ्यासः
4. क्रिया पञ्चमहायज्ञादि–अनुष्ठानंशक्तिः क्रिया
5. कल्याणम् सत्यार्जवदयादानाहिंसानभिज्ञाः कल्याणानि
6. अनवसादः देशकालवैषम्याद् शोकवतस्त्वाद्यनुस्मृतेश्च तज्जन्यदैन्यमभास्वरत्वं मनसो अवसादत्वम्, तद्विपर्ययः अनवसादः
7. अनुद्धर्षः तद्विपर्ययजा तुष्टिः उद्धर्षः तद्विपर्ययोऽनुद्धर्षः
8. श्रीमद्भगवद्गीता 12.8
9. श्रीमद्भगवद्गीता 12.6,7

# दायविभागकालाः

डॉ. सुधांशुभूषणपण्डा

धर्मशास्त्रं कल्पाङ्गत्वेन वैदिकमिति विपश्चितामाशयः। सकलशास्त्राणामनुमापकत्वेनामुस्मिक-फलप्रापकत्वेन पुरुषार्थानामुपादेयकत्वेन सकलशास्त्रललामभूत्वेन प्रधानपुरुषार्थस्य धर्मस्य प्रतिपादकत्वेन च धर्मशास्त्रं विद्वद्दृष्ट्याकाशे ध्रुवतारकसदृशं विराजते। अस्यैव धर्मशास्त्रस्यापरा संज्ञा भवति स्मृतिः। यथोक्तं मनुना "श्रुतिस्तु वेदो पिज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।[1]"

तदेव धर्मशास्त्रं मुख्यतो भागत्रयेण विभज्यते आचारभागः, व्यवहारभागः प्रायश्चित्तभागश्चेति। आचारभागे वर्णधर्माश्रमधर्मवर्णाश्रमधर्मसाधारणधर्माणां, व्यवहारभागे गुणधर्माणां प्रायश्चित्तभागे च निमित्तधर्माणां विचारः कृतो वर्तते। गुणधर्ममध्ये अभिषेकादिगुणयुक्तस्य राज्ञो धर्मोऽन्तर्भवति। अतो गुणधर्मो राजधर्म एव। राज्ञः प्रजापालनं परमोधर्मः। दुष्टानां निग्रहं विना प्रजापालनं सम्यक् कर्त्तुं न शक्यते। दुष्टपरिज्ञानं विना च तेषां निग्रहो वा कथं सम्भवेत्, अतस्तत् परिज्ञानं व्यवहारं विना न सम्भवति। अतः राजधर्मेषु व्यवहारदर्शनं मुख्यं भवति। उक्तञ्च-

**व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिव।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम्।।**[2] इति

मनूपदिष्टादस्मात् वचनात् व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम्। याज्ञवल्क्योक्तवचनात् व्यवहारदर्शनं राज्ञः परमकर्त्तव्यत्वेन च परिगणितं भवति।[3] स च व्यवहारः कीदृशः, किं तस्य लक्षणं कानि च तस्य पदानीति मनुयाज्ञवल्क्यादिभिः स्व-स्वस्मृतिषु प्रतिपादितानि।

मनूक्ताष्टादशव्यवहारपदेषु[4] नारदोक्तसाध्यभेदेन[5] शतमष्टोत्तरप्रकारेषु वा व्यवहारपदेषु दायभागोऽन्यतमः। अष्टादशव्यवहारपदेषु '[6]विभागश्चेति' शब्देन मनुना दायस्य स्थापना कृता। तत्रापि-

---

1. मनु.स्मृ. 2.10
2. तत्रैव 8.1
3. या.स्मृ. 2.1
4. मनु.स्मृ. 1.20
5. ना.-स्मृ. 1.20
6. मनु.स्मृ. 4.7

**सप्तवित्तागमा धर्म्या दायो लाभः क्रयोः जयः।**
**प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च।।**[1]

इत्यस्मात् वचनात् दायस्य सद्धनग्रहणोपायत्वेन परिगणना जातेति दृश्यते। पारस्कराचार्योऽपि अग्न्याधानस्य कालनिरुपणावसरे [2]आवसथ्याधानं दारकाले दायाद्यकाले वा एकेषामिति उक्त्वा दायाद्यकालस्यापि स्वीकारः कृतः। कदाचित् विभागस्य निन्दावगाहकानां कृते उट्टङ्कितं भगवता मनुना '[3]पृथक् विवर्धते धर्मः तस्मात् धर्म्या पृथक् क्रिया' इति। श्रुतिरपि '[4]मनुः पुत्रेभ्यो दायमभजदि'त्युक्त्वा दायभागस्य गौरवमाचष्टे। वस्तुतस्तु अनादौ संसारे न हि सर्वे जनाः एकत्रैवावस्थातुमर्हन्ति। अतो विभागस्यावश्यकता नितरामेवास्तीत्यत्र नास्ति विसंवादः। तस्मात् दायभागमहत्त्वं प्रतिपादितं नारदेनापि–

**[5]विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।**
**दायभागमितिप्रोक्तं तद्विवादपदं बुधैः।।**

एतेन पित्रादिधनानां पुत्रादिभिर्यो विभागः स एव दायभागपदेनोच्यते। भगवता मनुना व्यवहारस्याष्टादशभेदाः प्रकल्पिताः। ते [6]यथा–

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**संभूय च समुत्थानं दत्तस्यानपाकर्म च।।**
**वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।**
**क्रयविक्रयानुशयो विवादः स्वामिपालयोः।।**
**सीमाविवादधर्मश्च पारूष्ये दण्डवाचिके।**
**स्तेयञ्च साहसं चैव स्त्रीसंग्रहणमेव च।।**
**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।**
**पदान्यष्टादशैतानि व्यवहारस्थिताविह।।** इति

एतेषु विवादपदेषु 'विभागश्च' इति पदेन दायभागस्य गणना व्यवहारपदेषु भवतीति विज्ञायते। दायशब्दो दीयत इति व्युत्पत्त्या 'दा' धातोः 'घञ्' प्रत्ययेनैव निष्पद्यते।

[7]विज्ञानेश्वरमतानुसारेण दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते। स च द्विविधः। अप्रतिबन्धः सप्रतिबन्धश्चेति।

1. मनु.स्मृ. 10.114
2. पा.गृ.सू. 1.1.6
3. मनु.स्मृ. 9.11
4. दायभागसमीक्षा–भूमिका पृ.1
5. ना.स्मृ. 4.13.1
6. मनु.स्मृ. 8.4–7
7. या.स्मृ.मिता. पृ. 265

तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनञ्च स्वं भवतीत्यप्रतिबन्धो दायः। पितृव्यभ्रात्रादीनान्तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति सप्रतिबन्धो दाय इति।

[1]जीमूतवाहनमतानुसारेण दीयत इति व्युत्पत्त्या दायशब्दो, ददाति प्रयोगश्च गौणः। मृतप्रव्रजितादिस्वस्वत्वनिवृत्तिपूर्वकपरस्वस्वोत्पत्तिफलसाम्यात्, न तु मृतादीनां तत्र त्यागोऽस्ति। ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढ़ो दायशब्दो इति।

विज्ञानेश्वरमतेन विभागो नाम द्रव्यसमुदायविषयाणाम् अनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनमिति विभागः। विज्ञानेश्वरस्य अयमभिप्रायो यत् जन्मना जनस्य पैतृके धने स्वत्वं सामान्यं भवति। तस्य स्वत्वस्य द्रव्यसमुदायादाकृष्य द्रव्यविशेषेषु येन विधिना व्यवस्थापनं क्रियते स विधिर्विभाग इति।

जीमूतवाहमते एकेदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेण भजनं स्वत्वज्ञापनं वा विभाग इति।

मिताक्षराकारविज्ञानेश्वरेण पैतृके धने जन्मना स्वत्वमुत्पद्यत इति प्रतिपादितम्। तन्मते– "उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्याः" इति मिताक्षरोधृतगौतमवचनानुसारं जन्मना स्वत्वं प्रतिपादितम्। यतो हि गौतमसूत्रस्यायमेवार्थो विज्ञानेश्वरेणाद्रियते यद्, यतः पुत्रः पित्रा उत्पद्यते, तस्मादेव पुत्रस्य जन्मना एव स्वत्वमुत्पद्यते, जन्यजनकभावात्। पुनश्च प्रपञ्चेऽस्मिल्लोकेऽपि स्वत्वं तावद् जन्मना सर्वथा प्रसिद्धम्, तस्य लोकसिद्धत्वात्। यथा–

**[2]ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।**
**वृत्तिं तेऽपि हि काङ्क्षन्ति न दानं न च विक्रयः॥**

अर्थात् वचनमिदं जन्मना स्वत्वपक्षं समर्थयति, यतो वचनेनायमेवार्थोऽवबोध्यते यत् ये खलु मातुर्गर्भाद्बहिरागतास्तथा येऽप्यनागतास्त एव सर्वे भरणपोषणनिमित्तं धनमिच्छन्ति, न दानं न विक्रयो वा धनस्य कर्तुं शक्यते तेषु सत्सु, तस्मात् कारणाद् जातस्याजातस्य वा स्वत्वं पैतृके धनेऽवश्यमस्तीति निश्चीयते। अपि च तेनैवोदाहृतम्–

**[3]मणिमुक्ताप्रबालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य समग्रस्य न पिता न पितामहः॥**

इति वचनाच्च मणिमुक्ताप्रबालादिजङ्गमधने केवलं पितुरेव स्वाम्यं, स्थावरेषु भूम्यादिषु यद्भूसंपत्त्यादयस्तत्र यथा पितुस्तथैव पुत्रादीनामपि स्वत्वं सामान्यमेव। तेन जन्मना स्वत्वं सिद्धमिति।

---

1. दा.भा.पृ. 2
2. दा.भा.पृ. 6
3. मिता.पृ. 219, श्लोकोऽयं याज्ञवल्क्येनोक्त इति जीमूतवाहनेन (दायभागे, पृ.10) लिखितम्, परन्तूपलब्धयाज्ञवल्क्यस्मृतौ श्लोकोऽयं नोपलभ्यतेऽधुना।

किन्तु पुत्रस्य पित्राधीनत्वात् स्वातन्त्र्येण यथेष्टविनियोगार्हत्वं नास्ति। पितुस्तु पुत्रादीनां स्वत्वे सत्यपि स्वातन्त्र्यधर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणपोषणादिष्वापद्विमोक्षादिषु नित्याग्निहोत्रेष्टिकादिषु चावश्यकीयस्थलेषु स्थावरव्यतिरिक्तद्रव्यविनियोगे कर्मसिद्धये धनव्ययेऽस्त्येवाधिकार:, तदभावे-प्रत्यवायापत्ते:। आत्मनाऽर्जिते तु स्थावरे पुत्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव। स्पष्टार्थमुदाहृतं मिताक्षराकारेण। वचनं यत्–

**[1]स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्।**
**असम्भूय सुतान्सर्वान्नदानं न च विक्रय:॥**

जीमूतवाहनानुसारेण स्वाम्युपरमादेव स्वत्वमिति प्रतिपादनात् तदर्थं च तेन विभिन्नानां धर्मशास्त्राणां धर्मशास्त्रीयवचनानां प्रामाणिकत्वेन ग्रहणाच्च मरणप्रव्रज्यादिना स्वत्वनाशानन्तरं तेन सह संबन्धादेव निमित्तात् पुत्रादीनां स्वत्वं भवति। ''उत्पत्त्यैवार्थस्वामित्वं लभतेत्याचार्या।'' इति गौतमवचनस्येत्थं तेन महामहोपाध्यायेनैवार्थ: क्रियते यत् पितृस्वत्वोपरमेऽङ्गजत्वहेतुभूतेनोत्पत्तिमात्रसंबन्धनिबनेन जनकधने जन्यानां पुत्रादीनां स्वाम्यात् तद्धनमेव पुत्रादय: लभन्ते, नान्यसम्बन्धीत्याचार्याणामभिमतम्। अतो वचनमिदं जन्मना स्वत्वं न प्रतिपादयति। अपि तु जीवति पितरि पुत्राणां धनव्यये स्वाधीनतामेव वारयति। यथोक्तं मनुना–

**ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातर: समम्।**
**भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतो:॥**

[2]मनुवचनेनानेन जीवतो पितृधने पुत्राणामस्वाम्यं प्रतिपादितम्। अपि च जन्मना स्वत्वे सिद्धेऽपि ''जातपुत्र: कृष्णकेशोऽग्नीनादधीत'' इत्यादिश्रुतिवचनाद्धनसाध्येऽग्न्याधानादिवैधकर्मण्यपि पितुरनधिकार: प्रसज्यते, तदानीं द्रव्यसमुदाये पितापुत्रयो: साधारणत्वादनेकसाधारणधनव्ययकरणे चान्याय्यत्वात्। न च सद्य: जात: शिशु: धनव्ययकर्मणि पितुरनुमातुं शक्नुयात्। न वा लोके वस्तुत: पिता शिशुपुत्रस्यानुमतिमपेक्षते। पुनश्च पित्रादिनिधनानन्तरमेवास्मदीयं धनमिति लोके प्रयोगात्। एकपुत्रे च विभागं विनैव स्वत्वस्वीकरणाच्च सम्बन्धिनिधनमेव स्वत्वकारणमिति व्याचक्ष्याण: जन्मना स्वत्वं विभागस्य स्वत्वे कारणं च निरस्य जीवति पितरि पुत्राणां धनेऽस्वामित्वमिति द्रढ्यति।

किञ्चापि जन्मनैव स्वत्वमिति प्रमाणाभावाच्च न जन्मना स्वत्वम्, परन्तु मृतत्वप्रवजितत्वनिस्पृह-त्वादिना स्वामिस्वत्वनाशनात् स्वत्वमुत्पद्यते। यथा पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधने पितामहधने च दानादिव्यतिरेकेण यत् स्वं भवतीत्युक्तं तदप्रतिबन्धो दाय इति। क्रयो नाम समुचितमूल्यदानेन द्रव्यस्वीकार:। संविभागस्तु सप्रतिबन्धदायस्य विभागोऽर्थात् पितृव्यधने तत्पुत्राद्यभावे भ्रातृपुत्राधिकारो यस्मिन् स उच्यते। परिग्रहो ह्यनन्यसाधारणस्यारण्यादे: तृणकाष्ठादेर्वा प्रथमं ममेति बुद्ध्या ग्रहणम्।

1. या.स्मृ.मिता. पृ. 219
2. मनु.स्मृ. 9.104

अधिगमपदेन तु प्रणष्टस्वामिकस्य निध्यादेः प्राप्तिः। एते गौतमोक्ताश्च सर्वेषां ब्राह्मणादिवर्णानां साधारण्येन स्वत्वहेतवो भवन्तीति प्रतिपाद्यासाधारणस्वत्वज्ञापनार्थं वर्णविशेषस्य कृते प्रतिग्रहादिना ब्राह्मणस्याधिकं लब्धमिति उक्तम्। क्षत्रियस्य विजितेऽधिकमिति निर्विष्टं वैश्यशुद्रयोः इति वैश्यस्य कृषिवाणिज्यादिना इति जीमूतवाहनस्याशयः। अनेन यत् स्वत्वं प्रतिपादितं स्वाम्युपरमादिति तेन पुत्रः पैतृके धने सर्वतोभावेनाधिकारी भवितुमर्हति। तस्मादेव स्वाम्युपरमानन्तरं स्वत्वस्य यथेष्टविनियोग–प्रमाणसत्वादिदमेव जीमूतवाहनेन विचारितम्।

स्वत्वं शास्त्रैकसमधिगम्यं लौकिकं वेत्युपस्थितायां शङ्कायां स्वत्वं तावत् शास्त्रैकसमधिगम्यमिति निरवद्यविद्योतितेन जीमूतवाहनेनाङ्गीकृतं, तस्य शास्त्रमूलत्वादिति। तदर्थं तावत्'स्वामीरिक्थक्रय–संविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयो''रिति गौतमवचनं प्रमाणत्वेन स्वीकृतम्। लौकिकत्वे स्वत्वस्य वचनमिदं निरर्थकं स्यादिति तस्याभिप्रायः। तस्यैव गौतमवचनस्य व्याख्यावसरे [1]'ब्राह्मणस्याधिकं लब्धमिति' [2]'क्षत्रियस्य विजितं नाम धर्मयुद्धार्जितं क्षत्रियस्याधिकमिति, [3]'निर्विष्टं वैश्यशूद्रयोः' इति वैश्यस्य कृषिवाणिज्यादिना शूद्रस्य च दासवृत्त्या भृतिसदृशं विवक्षितम्।

अधिकमेवमनुलोमजानाञ्च लोकप्रसिद्धस्वत्वहेतुत्वेन प्रतिपादितम्। अतः 'सूतानामश्वसारथ्यम्' इत्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते सर्वस्यापि भृतिरुपत्वाद् 'निर्वेशो भृतिभोगयोः' इति त्रिकाण्डस्मरणात्।

गौतमवचनत्वेनैतानि स्वत्वनिमित्तानि प्रकल्पितानि, ततः स्वत्वं तावत् शास्त्रैकसमधिगम्यमिति नास्ति संशयलेशः। पुनश्च व्यतिरेकविचारदृष्ट्या एतदेव वक्तुं शक्यते यद् यदि नाम स्वत्वं शास्त्रीयं न स्यात्तर्हि–

**[4]योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।**
**याजनाध्यापनेनापि यथा स्तेनस्तथैव सः।।**

इति मनुवचनमत्र न संगच्छेत्, तत्र स्वत्वस्य शास्त्रीयत्वाभावाद् याजनाध्यापनादिवैधकर्मणि गृहीतधने दोषाभावः प्रसज्येत।

**[5]यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।**
**तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपस्यैव च।।**

इत्यत्र मिताक्षरोक्तवचनानुसारेण द्रव्यदातुश्चौर्यादिधने स्वत्वाभावात् तत्प्रतिग्रहकारिणोऽपि न

---

1. गौ.ध.सू. 2.1.40
2. गौ.ध.सू. 2.1.41
3. गौ.ध.सू. 2.1.42
4. मनु.स्मृ. 9.340
5. मिता.पु. 217

केवलं स्वत्वाभाव: प्रत्युतदोष एव। पुनश्च लौकिकत्वे स्वत्वस्य मम धनमनेन गृहीतमिति न हि कश्चन वक्तुं शक्नुयात्, यथा रामेण श्यामस्य किमपि धनमपहृतम्, अत्रास्मिन् स्थले यदि स्वत्वं शास्त्रीयमिति न कोऽप्यनुमनुते, तर्हिरपहर्तु: रामविषये श्यामेनाप्यभियोग: कर्तुं न पार्येत, शास्त्रीयत्वा-भात्तदानीमपहर्तु: रामस्यैव स्वत्वात्।

अत: स्वत्वं शास्त्रैकसमधिगम्यमिति मतं जीमूतवाहनेन स्वीक्रियते। विज्ञानेश्वरेण तु नैतन्मतं स्वीक्रियते। विज्ञानेश्वरमतानुसारं स्वत्वं तावल्लौकिकं, लौकिकार्थक्रियासाधनत्वाद् ब्रीह्यादिवत्। यथाह्याहवनीयादीनां शास्त्रैकसमधिगम्यत्वेऽपि यत्पाकादिलौकिकक्रियाकारित्वं दृश्यते तन्नाहवनी-यत्वादिरुपेणापि तु सामान्यलौकिकाग्नित्वादिरुपेण, तथैव स्वत्वस्य शास्त्रैकसमधिगम्यत्वेऽपि लौकिकव्यवहार्यत्वात् तस्य लौकिकत्वं स्वीकार्यमिति मिताक्षराकृतोऽभिप्राय:। पुनश्चादृष्टशास्त्रव्यवहाराणां प्रत्यन्तवासिनामप्यक्षरपरिचयरहितानां मूर्खाणां क्रयविक्रयादौ लोके स्वत्वव्यवहारो दृश्यते, न केवलं शास्त्राभिज्ञानाम्। अत: न तावत् स्वत्वं शास्त्रीयम्, अपि तु लौकिकम्। लोकेऽशास्त्रीयैरपि जनैस्तस्य व्यवहारदर्शनात् अतो नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते, अपरञ्चापि यस्मिन् द्रव्ये यस्य स्वत्वं नास्ति तस्मित् द्रव्ये क्रयाद्यर्थक्रियां नासौ साधयितुं शक्नोति। तस्माद् यथेष्टविनियोगार्हत्वेमेव स्वत्वमिति तावत् लोकप्रथितम्।

अपि च क्रतुसिद्ध्यर्थे द्रव्यार्जने नियमातिक्रमार्जितेनापि द्रव्येण क्रतुसिद्धिर्न भवति। तत्र पुरुषस्य नियमातिक्रे दोष: स्वत्वस्य लौकिकत्वादिति मीमांसकानां सिद्धान्त:। अनेन चौर्यादिलब्धधने स्वत्वं स्यादिति न मन्तव्यम् तत्र लोकेऽपि स्वत्वप्रसिद्धेरभावात्, न हि कश्चित् चौर्यधने चौरस्य स्वत्वमस्तीति मनुते, न वा स्तेन: चौर्यस्य धनस्य यथेष्टविनियोगं कर्तुं पारयति।

तस्माद् गौतमोक्तस्वत्वसाधनसूत्रं स्वत्वहेतुरुपेण लोकसिद्धमप्यनुवादत्वेनानुगृहीतम्। अत: स्वत्वं लौकिकं नियतोपायकञ्चेति मन्तव्यमिति विज्ञानेश्वरस्याभिमतम्।

विभागात् स्वत्वमुत स्वस्य सतो विभाग इति समुपस्थिते सन्देहे विभागात् स्वत्वमिति जीमूतवाहनस्याशय:, कथमिति चेदुच्यते "पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितु:" इति नारदवचनात् विभागात्पूर्वं न पुत्राणां स्वत्वमिति तेनैवोक्तत्वात्। यदि जन्मना स्वत्वं स्यात्तर्हि तदोत्पन्नस्य पुत्रस्यापि स्वत्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारप्रसङ्गात्। तथा विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिबन्धो नोपपद्यते, यतो हि सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभाव:। तथा–

**[1]शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्।**
**त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृक:॥**

---

1. ना.स्मृ. 4.13.6

इति नारदवचनेन जन्मनैव स्वत्वं नोपपद्यते। पुनश्च-

**[1]भर्ता प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।**
**सा यथाकालमश्नीयाद् दद्याद्वा स्थावरादृते॥**

अत्रास्मिन् प्रीतिदानवचने स्थावरादृते संबन्धयुक्तो व्यवहितयोजनाप्रसङ्गात् तत्र यद्यपि-

**[2]मणिमुक्ताप्रबालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य तु सर्वस्य न पिता न पितामहः॥**

इतीदं स्थावरस्य प्रतिषेधवचनम्, यत्पितामहोपात्तस्थावरविषयमस्ति।

अतीते पितामहे तद्धनं पितापुत्रयोः साधारणमिति मणिमुक्तादिः पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते। तस्मान्न जन्मना स्वत्वम्, किन्तु स्वाम्युपरमाद्विभागात् स्वत्वमिति तेनैवोक्तम् विज्ञानेश्वरमतानुसारेण विभागस्य स्वत्वकारणता नास्ति। यतः क्वापि शास्त्रे रिक्थक्रयादिवद् विभागस्य स्वत्वकारणं नोक्तम्।

यदि विभागात् स्वत्वं स्यात्तर्हि चौराणामपि चौर्यधनस्य विभागान्तरं स्वत्वमापद्येत। अतो विभागान्न स्वत्वम्। परन्तु स्वत्वे सति विभाग इति सर्वथा युज्यते। यतः ''शिरो नास्ति शिरः पीड़ा'' इति न्यायानुसारं स्वत्वाभावे कुतो विभागप्रसङ्गः। अपरञ्चापि विभागात् स्वत्वे सति स्वत्वविहीनस्यापि अपरस्य धनविभागे स्वत्वागमनं भवेत्। तस्मात्तन्निराकरणाय स्वत्वे सति विभाग इति विज्ञानेश्वरपक्षः साधीयानिति।

**धनविभागकालः**

विज्ञानेश्वरेण प्रथमं तद्विषयेऽऽलोच्यते यत्- ''ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेरन्'' इति गौतमवचनेन पित्रोर्मरणानन्तरं पुत्राणामिच्छयेत्येको विभागकालः। अत्र पुत्राणां कर्तृत्वेन ग्रहणमर्थात् पुत्रा अत्र कर्तारः पित्रोरुर्ध्वं समानभावेन ऋणं, रिक्थं च विभजेयुः, यतो हि सममिति प्रकाशनियमः। सममेवेति रिक्थमृणं च विभजेरन् इति मनुवचनादपि प्रतीयते।

**[3]ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।**
**भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥**

---

1. दायभागविमर्शः पृ. 125
2. मिता.पृ. 219, श्लोकोऽयं याज्ञवल्क्येनोक्त इति जीमूतवाहनेन (दायभागे, पृ.10) लिखितम्, परन्तूपलब्धयाज्ञवल्क्यस्मृतौ श्लोकोऽयं नोपलभ्यतेऽधुना।
3. मनु.स्मृ. 1.103

इत्युपक्रम्य पुनरपि तेनोक्तं यत्–

**[1]ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥**

एताभ्यां मनुवचनाभ्यां ज्ञायते यद् ज्येष्ठ एव पित्रोः स्वत्वनाशानन्तरमधिकारी भवति। ततः सर्वे भ्रातरः मिलित्वा विभागं कुर्वन्ति। विभागकाले सर्वस्माद्द्रव्यसमुदायाद्विंशतितमोभागः सर्वद्रव्येषु च यच्छ्रेष्ठं तज्जेष्ठाय दातव्यम् ततः चत्वारिंशत्तमो भागो मध्यमं च द्रव्यं मध्यमाय दातव्यम्, ततः तुरीयमशीतितमो भागो हीनं द्रव्यं च कनिष्ठाय दातव्यम्। विषयेऽस्मिन् मनुनोक्तम्–

**[2]ज्येष्ठस्य विंशः उद्धारः सर्वद्रव्याच्च यद्वरम्।**
**ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः॥**

किञ्चापि पित्रोरूर्ध्वं ज्येष्ठः द्वौ भागौ गृह्णीयात्, तदनन्तरं जातस्य सार्धैकभागस्ततोऽनुजानामेकैको भाग इत्युद्धारव्यतिरेकेणापि विषमविभागो दर्शितः। उद्धारेऽनुद्धृते त्वेषामिति मनुवचनेन ''ज्येष्ठं वा श्रेष्ठभागेनेति'' याज्ञवल्क्यवचनानुसारं च विषमविभागः प्रमाणितः। अतः इदानीं प्रश्नः समुदेति यत्, यदि विभागो विषमस्तर्हि कथं समं विभजेरन्निति नियम्यते? अत्रोच्यते सत्यमेतत् कारणमयं विषमविभागो यद्यपि शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः, [3]''अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु'' इति याज्ञवल्क्यनिषेधात्। यथोक्तं ''महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्'' इति विधानेऽपि लोकविद्वेषान्नानुष्ठीयते कलौ। यद्यपि ज्येष्ठः दद्यादिति देशविशेषानुसारं केचनामनन्ति, तथापि शास्त्रविरोधान्निराकृष्टम्। तस्माद् विषमविभागः शास्त्रदृष्टोऽपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेयोऽपितु सममेव विभजेरन्निति विधिः कलौ दृश्यते।

पित्रोर्धने पुत्राः विभजेयुरित्युक्तम्। किन्तु क्वचिद् मातृधनेऽपवादो दृश्यते। मातुर्धनं दुहितरो विभजेरन्नित्यत्र मात्रा यदृणं कृतं पदपनीयावशिष्टं सर्वा दुहितरः प्रथमं गृह्णीयुरिति। तत्रापि दुहितृषु प्रथमं तावत् प्रत्तानां ततः परमप्रतिष्ठितानां निर्द्धनानां, ततः प्रतिष्ठितानामिति क्रमः। सर्वदुहित्रभावे पुत्राः गृह्णीयुरिति सर्वसम्मतम्। अत ''ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेरन्'' इति गौतमवचनेन, ''विभजेरन् सुताः पित्रोरूर्ध्वमित्यनेन च याज्ञवल्क्यवचनेन पित्रोर्मरणानन्तरं पुत्राणामित्येको विभागकालः। ''निवृत्ते चापि रजसीति'' गौतमोक्त्या मातरि निवृत्तरजस्कायां पितरि धननिस्पृहे तदनिच्छयापि पुत्राणामिच्छया द्वितीयो विभागकालो विज्ञानेश्वरेण प्रदर्शितः। यतः जीवत्यपि पितरि द्रव्यनिस्पृहे मातरि च निवृत्तरजस्कायाम्, पितुरनिच्छायामपि पुत्रेच्छानुसारेण विभागो भवति। तच्च नारदेन समर्थितम्, ''अत ऊर्ध्वं पितुः पुत्राः विभजेयुर्धनं समम्'' इति पित्रोरूर्ध्वं विभागं प्रतिपाद्य मातुर्निवृते रजसि पुत्रेषु भगनीषु च'' इत्युक्त्वा–

---

1. मनु.स्मृ. 1.105
2. मनु.स्मृ. 1.112
3. या.स्मृ. 1.156

''निवृते चापि रमणे पितर्युपरतस्पृहे'' इति दर्शितः। अत्र पुत्राः धनं समं विभजेयुरित्यनुषज्यते। अतोऽयं पुत्राणामिच्छया विभागस्य कृते द्वितीयकाल उक्तः। ''जीवति चेच्छति'' इति गौतमोक्त्या जीवति पितरि तदिच्छेति विभागस्य तृतीयकालो दर्शितः। पित्रा यदि विभाग इष्यते तर्हि तेन सुता विभजनीया, अर्थात् सः पिता स्वेच्छया आत्मनः सुतान्विभजेदिति। इच्छया विभजेदिति इच्छायाः निरङ्कुशत्वादनियमौ प्राप्तौ भवतः, ज्येष्ठं श्रेष्ठभागेन, सर्वे वा स्युः समांशिनश्च इति।

**[1]विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः॥**

इति याज्ञवल्क्यवचनेन विभागद्वयं समविषमभावेन प्रकटितम्। विषमभागश्चायं ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यभागेन, कनिष्ठं कनिष्ठभागेनिति स्वार्जितद्रव्यविषयपरको भवति, किन्तु परम्परागतपैतृके पैतामहादिधने पितुः पुत्रस्य च समस्वाम्यत्वकीर्तनान्न तत्र विषमविभागो भवतीत्युक्तम्। अपि च

**[2]यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा॥**

इति याज्ञवल्क्यवचनेन पत्नीनां पुत्रसमांशकीर्तनदर्शनादवगम्यते यद् यदा पिता पुत्रान् विभजति तदा तत्समं धनमपि पत्न्यै देयम्। पत्न्यः यदि बह्व्यः स्युः तदानीं ताः सर्वाः पुत्रसमांशभाजः करणीयाः। याभिः भर्तुः श्वशुराद् वा किमपि स्त्रीधनं न स्वीकृतम्, यदि किञ्चिद्धनं लब्धमस्ति तर्हि ताभ्य अर्धांशः देयः। 'दत्ते त्वर्धं प्रकल्पयेत्' इति याज्ञवल्क्यवचनं, अर्धपदमत्र यावता दत्तेन पुत्रतुल्यांशः स्यात्तावदेव देयमिति तात्पर्यम्।

यदि कश्चन पुत्रेषु शक्त्यनुसारमेव शक्तः सन् पितृद्रव्यं नेच्छति तदानीं तस्मै पुत्राय तदनिच्छायामपि किञ्चिद्दत्वा पिता विभजेत्। सोऽनीहमानः पुत्रः पित्रा किञ्चिद् दत्वा विभक्तव्यः यथोक्तं याज्ञवल्क्येन–

**[3]शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक् क्रिया।** इति

न्युनाधिकविभागप्रसङ्गे योऽसौ न्यूनाधिकविभागे धर्मयुक्तः उक्तः, स पितृकृतविभाग एव स्वीक्रियतेऽन्यथा येन केनापि न्यूनाधिकविभागः कर्तुं शक्यते। पुनश्चासौ पिता विभागकाले व्याध्यादिरहितोऽवश्यमेव भवेत्, अन्यथा उच्छास्त्रवर्तिरुपेण यत् किमपि कुर्वन् दायभागो भवेदित्यस्मिन् प्रसङ्गे नारदेनोक्तं यत्–

---

1. या.स्मृ. 2.114
2. या.स्मृ. 2.115
3. या.स्मृ. 2.116

[1]व्याधितः कुपितश्चैव विषयाशक्तमानसः।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः॥

अतएव विभागो यदि पितृकृतः स्यात् तर्हि सो विभागो न्यूनाधिको धर्मयुक्तविभाग इत्युच्यते, अत्र विभागविषये पितरि जीवति तस्यैच्छैव नियामिका। अतोऽयमेव तृतीयकालरुपेण गृह्यते। जीमूतवाहनमते तु पितृधनविभागस्य यथा कालद्वयं पितामहधनविभागस्यापि तथैव कालद्वयं पृथक् पृथक् निर्दिष्टम्।

तत्र प्रथमतः पितृधनविभागस्य कृते यत्कालद्वयं तेन बहुयुक्तिपुरस्सरं स्वग्रन्थे समुपस्थापितं तदत्रोच्यते–

1. पितुः पतितत्वनिस्पृहत्वोपरमैः स्वत्वापगमः एक एव कालः।

2. स्वत्वे सति जीवति तस्येच्छा द्वितीयकाल इति। इत्येतत्कालद्वयं विधाय पुनरपि पितामहधनविभागस्य कृते कालद्वयं पृथक्तया विहितं यत्–

1. पित्रोरभाव एकः कालः।

2. मातुर्निवृत्ते रजसि पितुरिच्छात इत्यपरकालः। जीमूतवाहनेन स्पष्टीक्रियते यत् सामान्येनोक्तस्य मातृनिवृत्तरजस्कत्वविशेषणस्य पितृधनविभागकालत्वे विभागानन्तरं पुत्रोत्पत्तेरसम्भवात् उर्ध्वं विभागाज्जातस्येत्यादिमनुवचनस्य निर्विषयतापत्तेः। नाप्यस्य वचनस्य मातृधनगोचरत्वं मातुरेव तदानीं निर्धनतापत्तेः।

अतो निवृत्ते रजसीति विशेषणं पितामहादिधनं विषयीकरोति। पुनश्च, नहि पितुरिच्छायाः व्यतिरेकेण मातुः सत्यामपि रजोनिवृत्तौ विभागोऽपि भवितुमर्हति। अतः पितुरिच्छायाः सद्भावे तु विभागसम्भवात् ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवति चेच्छति' इति गौतमवचनात् पितुरिच्छातो विभाग इति निर्णीयते। अतः पित्रोरभावः इत्येकः कालः निर्धारितः, यश्च पितामहधनविभागस्य कृतेऽपि सामान्येनावगम्यते। ''पिता च माता च पितरौ''। तयोः पित्रोरपि द्विवचनस्मरणादिदमेवावधेयं यत् सोदरभ्रातृणां पितृधनविभागेऽपि पितुरभाव इव मातुरप्यभावोऽपेक्ष्यते। यद्यपि पितुर्मातुश्चेति द्वयोरभाव एव पितृधनविभागस्य मुख्यं निमित्तं तथापि जीवतोरपि इत्यत्रापि शब्देन तयोर्जीवनस्योपस्थितिः कीर्तनाद् वचनस्यास्य पितृधनविभागगोचरत्वं न तु मातृधनगोचरत्वम्। तस्माद्विभागे पित्रोरभावनिमित्तत्वेन स्वीकृतः। मातुर्निवृत्ते रजसीति योऽपरकालत्वेनोक्तस्तत्रापि केवलं मातुर्निवृत्तरजस्कायां पितुरिच्छामन्तरेण विभागः सम्भवति। 'अनीशास्ते हि जीवतोः' इति [2]मनुस्मरणात् तथा 'जीवति चेछति' इति गौतमस्मरणात् जीवति पितरि पुत्राणामविभागो यावद्धनगोरचरीभूतो भवति। अतो जीवति पितरि तस्येच्छेत्यपरकालः। इति।

---

1. या.स्मृ. 4. दायभाग.16
2. मनु.स्मृ. 9.104

# वेङ्कामात्येन विरचितस्य उर्वसीसार्वभौमेहामृगस्य अवलोकनम्

डॉ. चि. पालय्यः

कर्णाटकराज्ये मैसूरुनगरं बहोः कालात् प्रथितमस्ति। तत्र अनेके यदुवंशराजानः राज्यभारं चक्रुः। मैसूरुसंस्थानस्य राजानः प्रामुख्यम् अलभन्त। तदाश्रये च भूयांसो विद्वांसः कवयश्च देवभाषायां देशभाषायां च नैपुण्यं प्राप्य उत्तमानि काव्यानि रचयित्वा परां ख्यातिं लेभिरे। इतिहासे मैसूरुनगरस्यापि एकं विशिष्टं स्थानमस्ति। श्री इम्मडिकृष्णराजओडेयर् (क्रि.श. 11734-1766), श्रीनञ्जराजओडेयर् (क्रि.श. 1766-1770), श्री बेट्टदचामाराजओडेयर् (1770-1776) इत्येते राजानः मैसूरुसंस्थानस्य राजानः आसन्। तस्मिन् समये अयं वेङ्कामात्यस्य मन्त्री आसीत्। हैदरालिशसविधेऽपि (क्रि.श. 1763-1780) एषः प्रधानमन्त्री अभवत्। अतीव धीमानसौ न केवलं राजकार्येषु कुशलः परं काव्यनिर्माणेऽपि चतुरः आसीत्। संस्कृत-कन्नड-आन्ध्रभाषासु प्रसिद्धः विद्वानयं अनेकाः कृतीः रचियामासेति ज्ञायते। सङ्गीते चित्रकलायां च अतीवासक्तिरस्येत्यपि अवगम्यते।

**कवेः देशकालादिविषयः**

क्रिस्तशक अष्टादशशताब्द्या मैसूरुसंस्थानस्य इतिहासे वेङ्कप्पय्यस्य पात्रं विशिष्टतमम्। अस्य जन्मस्थानं 'रामपुरम्' इति कश्चन ग्रामः। अस्य ग्रामस्य नाम तस्य सर्वासु कृतिषु उद्धृतमस्ति। मैसूरुनगरस्य सीमपे नैऋत्यभागे चट्टनहल्लिनामकग्रामः कपिलानद्याः तीरे वर्तते। तस्य ग्रामस्य समीपे रामपुरग्रामः विद्यते। वेङ्कप्पय्यः अतीवक्लिष्टपरिस्थितौ जीवितवान् इति ज्ञायते। तस्य सांसारिकसन्निवेशाः न सुखदायिनः आसन्। राजसौधस्य परिस्थितिः परिपूर्णतया षड्यन्त्रव्यूहे अवर्तत। राजानः न बलिष्ठाः। अधिकारः एकस्यापि हस्ते न स्थिरः अभवत्। तत्समये कळलेनञ्जराजः अतीव प्रभावशाली पुरुषः। स तावत् द्वितीयकृष्णराजप्रभोः श्वशुरः। नञ्जराजः चतुरः शासकः इति प्रथितः। तत्काले सः सर्वाधिकारी नञ्जराजः इत्येव प्रसिद्धः। वस्तुतः सः धनसचिवालये करसचिवालये च अधिकारी। अथापि सः अन्येषु विभागेष्वपि स्वीयप्रभावं विस्तारयति स्म। सैन्यं स्वीयमृष्टौ स्वीकर्तुं प्रायतत। तत्र सिद्धम्। यतः सर्वं सैन्यं हैदरालिवशे आसीत्। सेनाविभागे हैदरालिः अतीव प्रभावशाली व्यक्तिरभवत्। अयं हैदरालिः शीघ्रातिशीघ्रं स्वीयप्रभावं वर्धयित्वा नञ्जराजं तस्य स्थानात् प्रच्यावयितुं समर्थो बभूव।

मैसूरुसंस्थानस्योपरि अन्येषां संस्थानानाम् आक्रमणादिकं आसीत्। महाराष्ट्रीयाः अस्योपरि आक्रमणं कुर्वन्तः आसन्। एतस्मिन् समये वेङ्कप्पय्यः मैसूरुसंस्थानस्य परतः प्रविश्य तान् सर्वान् स्थगयितुं समर्थोऽभवत्। वेङ्कप्पय्यः प्रथमतः मैसूरुराज्ञां प्रीतिं संपादयितुं प्रायतत। अस्य राजकीयप्रवेशकाले

कळलेनञ्जराजः, हैदरालिश्च द्वावपि प्रभावशालिनावास्तान्। द्वितीयः कृष्णराजओडेयर् भूपतिः क्रि.श. 1734 तमे वर्षे यदा राज्यस्य सिंहासनमारुरोह तदा वेङ्कप्पय्यः 'प्रधान' इति स्थाने निर्दिशितोऽभूत्। षड्वर्षपर्यन्तं स्वीयबुद्धिमत्तया स्वशक्त्या च राज्यशासने स्वीयाधिकारं प्रचालयामास। नञ्जराजः कृष्णभूपतिस्थानमेवाक्रमितुं सन्नद्धः। तत्समये वेङ्कप्पय्यः कृष्णराजनृपस्य पक्षमादृत्य साहाय्यं प्रादात्। परमेतत् वेङ्कार्यस्य साहाय्यं न चकार। यतः तत्काले हैदरालिः अत्यन्तप्रभावशाली सेनानायकः। एवमेव तस्य स्थानं वेङ्कार्यस्य प्रधानस्थानादपि उन्नतमभवत्। यदा नञ्जराजओडेयर् सिंहासनमारुरोह तदा वेङ्कप्पय्यस्य स्थानं सुरक्षितमभूत्। सेनाविभागमेकं विहाय अन्येषु सर्वेषु विभागेषु अधिकारं निर्व्यूढवान्।

प्रथमतः वेङ्कप्पय्यः प्रधानीवेङ्कप्पय्यः इति प्रथितः अभव्। यतः सः अमात्यकुलादेव जन्म लेभे। अस्य पिता हम्पेयामात्यः। अमात्यपदं तस्य वंशस्य नामेति ज्ञायते। तस्य पूर्वजाः विद्वांसो भूत्वापि राजकार्यनिरताः आसन् इति विशेषः। एष अरुनवेलिवियोगिब्राह्मणः। जन्मतः एव असौ धीमान्। राजकीयविषयेषु कुशली च। क्रि.श. 1757 समये राज्ञीवीरम्माजी बिदनूरुनरगं शाससि स्म। तदा अयं वेङ्कामात्यः तस्याः समीपे राजप्रतिनिधिरूपेण सेवा प्रविवेश। कतिपयकालानन्तरम् अमुं वेङ्कामात्यं सा वीरम्माजी 'होसंगडिनगरं' प्रति प्रेषितवती। प्रदेशोऽयमधुना दक्षिणकन्नडजिल्लाविभागे वर्तते।

तत्र बिदनूरुनगरे सप्तवर्षपर्यन्तमयं शासनमकरोत्। तस्य शासनसामर्थ्यं परिगणय्य राज्ञी दिवानकार्यालये अमुं प्रति प्रधानः इति उन्नतां पदवीं प्रादात् राजकार्येषु अस्य सेवा प्रथमतः राज्ञ्याः वीरम्मायाः समीपे एव अभवत्। अस्मिन् समये एवाऽसौ संस्कृतस्य कृतीनां रचनाकार्ये निरतः आसीत्।

शासनशौण्डं राजकार्यकुशलममुं दृष्ट्वा हैदरालिः आकर्षितस्सन् स्वीयं रीरङ्गपत्तनं प्रत्याहूय प्रधानपदवीं दत्वा संसानयामास। हैदरालेः प्रार्थनायाः कारणात् बिदनूरुशासनकार्यमपि वेङ्कामात्यः स्वीचकार। एतत्समये राज्यस्य अभिवृद्ध्यर्थं प्रजानां रक्षणादिकार्यविषयेषु च संपूर्णं समयं विनियुज्य प्रजानां प्रीतिं संपादयामास। राज्यस्य अर्थार्जनविषये नूतनार्थव्यवस्थां प्रकल्प्य आर्थिकक्षेत्रं वर्धयामास। धनस्य अपव्ययादिकमपि दूरीचकार। राज्यस्य वाणिज्यव्यवस्थामपि महत्त्वपूर्णं परिवर्तनमकरोत्। मैसूरुसंस्थाने तिम्मप्पः इति कश्चन राजप्रतिनिधिः अवर्तत। तेन धनस्य दुर्विनियोगः कृतः इति ससाक्षिकमन्विष्य राज्ञे न्यवेदयत्। एतेन तस्य नैजं सामार्थ्यां बहिः प्रकाशितम्।

अयं च सन्धिकार्यचतुरोऽपि। एतेन कारणेन क्रि.श. 1774 तमे वर्षे हैदरालिः मराठाधिपेन रघुनाथरावेण सार्धं सधिः समुत्पादयितुं पूनानगरं प्रति वेङ्कामात्यममुं प्रेषयामास। कार्यमिदमसौ सम्यक् साधितवान्। एवमेव क्रि.श. 1770 तमे वर्षे कर्णाटकराज्यस्य हासन-बेलूरु-तथान्याषां संस्थानानां पाळेगाराणां (दण्डनायकानां) दमनकार्यं सम्यक् साधयामास। क्रि.श. 1771 तमे वर्षे कर्णाटकस्य मेलुकोटे समीपे मराठैस्सह नियुध्य नृपं टिप्पूं प्रति मैसूरुसंस्थानं संपादयामासेत्यपि ज्ञायते।

वेङ्कामात्यः स्वीयजीवितस्य अन्तिमदिवसेषु सुखी नासीत्। दुःखी एवाऽभवत्। तानि दिनानि तु तस्य दुःखदायकानि। अयं वेङ्कामात्यः परमया निष्ठया हैदरालेः सेवां यद्यप्यकरोत् तथापि सः

हैदरालिः पिशुनजनानां वचनमनुसृत्य अस्मिन् असन्तुष्टो बभूव। अधिकारसमये असौ धनादिविषये स्वाधिकारं दुर्विनियोगं चाकरेति मिथ्यापवादं तदुपरि समारोप्य तं प्रधानसचिवस्थानात् निष्कास्य बन्धनागारं प्रेषयामास। परं तत्पश्चात् सः निरपराधी इति हैदरालिः अजानात्। सद्य एव तं बन्धनागारात् मोचयामास। तत्तः केवलप्रधानविरुदभाजे तस्मै सः हैदरालिः प्रतिमासं एकसहस्त्ररूप्यकपरिमितं वेतनं प्रदास्यन् ररक्ष। क्रि.श. 1783 तमे वर्षे वेङ्कामात्यः मधुमेहरोगेण पीडितस्सन् दिवंगतः।

**वेङ्कामात्यस्य कृतयः**

वेङ्कामात्यः साहित्यक्षेत्रे विपुलां सफलां कृषिं चकार। वेदवाण्यां देशवाण्यां च तस्य निरर्गलः कविताप्रवाहः पण्डितान् पामरांश्च तोषयामास। साहित्यस्य नानाप्रकारेषु तेन कृतयो रचिताः। तस्यकाव्यरचनानैपुण्यं समेषां प्रशंसायाः पात्रमासीत्। प्रधानिवेङ्कामात्यस्य संस्कृतकन्नडभाषायाः ग्रन्था अनेके राजन्ते। रूपकप्रभेदे सः नाटकं प्रकरणं इति भेदद्वयं विहाय भाणडिमव्यायोगसमवकार–वीथ्यङ्केहामृगानां लक्ष्यग्रन्थान् चकार। सः अलङ्कारलक्षणग्रन्थं कन्नडभाषाकाव्यान्यपि व्यरचयत्। तेषां नामानि चेत्थं वर्तन्ते।

**कृतयः प्रभेदाः**

| | | |
|---|---|---|
| 1. | कामविलासभाणः | रूपकम् |
| 2. | महेन्द्रविजयडिमः | रूपकम् |
| 3. | वीरराघवव्यायोगः | रूपकम् |
| 4. | लक्ष्मीस्वयंवरसमवकारः | रूपकम् |
| 5. | सीताकल्याणवीथी | रूपकम् |
| 6. | रुक्मिणीमाधवाङ्कः | रूपकम् |
| 7. | कुक्षिम्बरभैक्षवप्रहसनम् | रूपकम् |
| 8. | ऊर्वशीसार्वभौमेहामृगः | रूपकम् |
| 9. | जगन्नाथविजयकाव्यम् | पद्यकाव्यम् |
| 10. | सुधाझरी | गद्यकाव्यम् |
| 11. | कुशलवचम्पूः | चम्पूकाव्यम् |
| 12. | हनूमच्छतकम् | स्तोत्रकाव्यम् |
| 13. | सूर्यशतकम् | स्तोत्रकाव्यम् |

| | | |
|---|---|---|
| 14. | अलङ्कारमणिदर्पणम् | अलङ्कारलक्षणग्रन्थः |
| 15. | चिदद्वैतिका | अद्वैतग्रन्थः |
| 16. | इन्दिराभ्युदयम् | पद्यकाव्यम् (कन्नडभाषाकाव्यम्) |
| 17. | हनूमद्विलासः | पद्यकाव्यम् (कन्नडभाषाकाव्यम्) |
| 18. | कर्णाटरामायणम् | कन्नडभाषाकाव्यम् |
| 19. | सीताविवाहनाटकम् | कन्नडभाषाकाव्यम् |
| 20. | हनूमज्जयकाव्यम् | कन्नडभाषाकाव्यम् |

**ईहामृगलक्षणम्**

लोकोत्तरवर्णनानिपुणकविकर्म काव्यं काव्यं श्रव्य-दृश्यभेदेन द्विविधिम्। श्रव्यकाव्यं पद्य गद्य-चम्पूभेदेन त्रिविधम्। दृश्यकाव्यं पुनः नाटकादिभेदेन दशधा भिद्यते। तदुक्तं दशरूपके-

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥**[1]

सामान्यतः संस्कृतसाहित्ये दशरूपकप्रभेदानामपि नाटकमित्येव व्यवहारः अस्ति। परं नाटकं दशरूपकेषु अन्यतमम्। संस्कृतवाङ्मये नाटकानि बहूनि दृश्यते। प्रकरणमपि किञ्चन दृश्यते। परं नाटकप्रकरणे विहाय इतररूपकप्रभेदानाम् उदाहरणानि अल्पीयांस्येव वर्तन्ते। दशरूपकेषु 'ईहामृगलक्षणम्' एकः भेदः। तल्लक्षणं दशरूपके एवं निरूपितमस्ति।

**मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम्।**
**नरदिव्यावनियमान्नायकप्रतिनायकौ ॥**[2]

**ख्यातौ धीरद्धतावन्त्यो विपर्यासादयुक्तकृत्।**
**दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ॥**[3]

**शृङ्गाराभासमप्यस्य किञ्चत् किञ्चत् प्रदर्शयेत्।**
**संरम्भं परमानीय युद्धं व्याजान्निवारयेत्।**[4]

**वधप्राप्तस्य कुर्वीत वधं नैवं महात्मनः॥**[5]

---

1. दशरूपकम् 1.8
2. दशरूपकम् 3.72
3. दशरूपकम् 3.73
4. दशरूपकम् 3.74
5. दशरूपकम् 3.75

मृगवदलभ्यां नायिकां नायकः अस्मिन् ईहत इति ईहामृगः। ख्याताख्याते वस्तु। अन्त्यः प्रतिनायकः। विपर्यासात् विपर्यज्ञानात् अयुक्तकारी विधेयः इति प्रतापरुद्रीयरत्नापणव्याख्याने एवमुक्तम्। गर्भावर्शरहितास्त्रयः सन्धयो यस्मिन् तत् त्रिसन्धिकम्। आभासरसयोरनुरागशून्यनायिकानुरक्तत्वादिति भावः। अत एवोक्तं दशरूपके–'दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः इति। अवधं युद्धमजायुद्धकल्पमित्यर्थः इति। साहित्यदर्पणकारेण विश्वनाथेन षष्ठपरिच्छेदे ईहामृगलक्षणमित्थं भणितमस्ति। तद्यथा–

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा।।[1]
नरदिव्यावनियमौ नायकप्रतिनायकौ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृतम्।।[2]
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चत् प्रदर्शयेत्।।[3]
पताकानायका दिव्या मार्त्या वापि दशोद्धताः।
युद्धमानीय संरम्भं परं व्याजान्निवर्तते।।[4]
महात्मानो वधप्राप्ता अपि वध्यास्स्युरत्र नो।
एकाङ्को देव एवाऽत्र नेत्याहुः परे पुनः।।[5]
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे। ।।[6]

मिश्रं ख्याताख्यातम्। अन्त्यः प्रतिनायकः। पताकानाकास्तु नायक-प्रतिनायकयोर्मिलिता दश। नायको मृगवत् अलभ्यां नायिकामत्र ईहते वाच्छतीति ईहामृगः।

यथा–'कुसुमशेखरविजयादिः इति।

अस्य– लक्ष्मीव्याख्याने विस्तृतं विवरणं समीचीनम् एवमुक्तमस्ति –ईहामृगाख्यं रूपकं निरूपयति– ईहामृग इति। मिश्रं ख्याताख्यातो वृत्तान्तो यत्र स तथोक्तः, चत्वारोऽङ्का यस्मिन् स तथोक्तः रूपकविशेषः ईहामृगः प्रकीर्तितः। व्युत्पत्तिलभ्योऽर्थो विवरणे स्पष्टः। तत्र ईहामृगे मुखप्रतिमुखे सन्धी भवेताम्। तथा निर्वहणं च सन्धिर्भवेत् अनियमौ नियमरहितौ नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकौ भवेताम्। एवञ्च नरो नायकः दिव्यश्च प्रतिनायकः तथा नरः प्रतिनायकः दिव्यश्च नायकोऽत्र भवितुं शक्नोतीति स्फटोऽर्थः। तयोराद्यो धीरः अन्त्यः उद्धतः स च गूढभावात् प्रचछन्नभावात् अयुक्तकृत् अयुक्तकार्यकारी। स्वस्य रमणमनिच्छन्तीं दिव्यस्त्रियं दिव्याङ्गनाम् अपहारेण बलात्कारेण आदिपदाच्छलेन च इच्छतः सुरतं कामयमानस्य अस्य प्रतिनायकस्य किञ्चित् किञ्चित् शृङ्गाराभामपि

1. साहित्यदर्पण 6.246
2. साहित्यदर्पण 6.245
3. साहित्यदर्पण 6.247
4. साहित्यदर्पण 6.248
5. साहित्यदर्पण 6.249
6. साहित्यदर्पण 6.250

कविः प्रदर्शयेत् उपवर्णयेत्। दिव्या दिवि भवा मर्त्या मनुष्या वा उद्धतस्वभावा उत्कटप्रकृतयः दश पताकानायकाः 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्याभिधीयते, इत्युक्तपताकाख्यार्थप्रकृतिसंयुक्ता भवेयुः तथा च नायकप्रतिनायकौ दौ पताकानायका दश इति मिलित्वा दिव्यमर्त्या द्वादशनायका भवेयुरित्यर्थः। परं प्रतिनायकबलं संरम्भं क्रोधम्, अनीय प्रापय्य स्थितस्य नायकस्य व्याजात् कार्यन्तरच्छलेन युद्धं निवर्तते। निर्वर्तयेदिति पाठे तु परं युद्धस्थानमानीय संरम्भं निर्वर्तयेदित्यर्थः इति वागीशाः। अत्र ईहामृगे महात्मानो लोकाः वधप्राधाः वधयोग्या अपि नो वध्याः स्युः। तेषां वधः पुराणादिषु ख्यातोऽपि वधानर्हत्वात् कविभिर्न वर्णनीय इत्यर्थः। अन्यमतं दर्शयितुमाह-एकाङ्क इति। एकः अङ्कः यत्र स एकाङ्कः, अत्र ईहामृगे देव एच नेता नायक इति पुनः परे आहुः। तदितरे च दिव्यस्त्रिहेतुकं युद्धं नायकाश्च षट् इत्याहुरिति पूर्वेण सम्बन्धः। ईहामृगव्युत्पत्तिं दर्शयति नायको मृगवदिति। अलभ्यां दुष्प्राप्यत्वेन अप्राप्याम्। तथा च अस्मिन्नर्थे ईहामृगशब्दः पृषोदरादित्वात् साधनीयः।

**ऊर्वशीसार्वभौमेहामृगः-**

अमात्येन वेङ्कामात्येन दशरूपकलक्षणानुसारात् 'उर्वशीसार्वभौमेहामृगः' इत्याख्यो ईहामृगः सुनिबद्धोऽस्ति। उर्वशी अप्सरस्त्री। पुरूरवाः नाम राजा सार्वभौमशब्देन ग्राह्यः। 'उरून् महतोऽपि अश्नुते व्याप्नोति वशीकरोतीति, यावत्। यद्वा उरूं नारायणस्य महर्षेः उरूप्रदेशम् अश्नुते योनित्वेन व्याप्नोतीति। उर्वशी च सार्वभौमश्च उर्वशीसार्वभौमौ। तयोः ईहामृगः उर्वशीसार्वभौमेहामृगः इति विग्रहः। उर्वशीसार्वभौमसम्बन्धी इहामृगः इति फलितोऽर्थः।

प्रकृतलक्षणानुसारेण अस्मिन् ईहामृगे राजा पुरूरवाः अदिव्यनायकः। अयञ्चमनुष्यः। परमन्तो नायिकां प्राप्नोतीति कृत्वा नायको भवति। सुराधिपः महेन्द्रः प्रतिनायकः। स च दिव्यः। उभावप्यत्र धीरोद्धतौ। उर्वशी अप्सरस्खी। सा च दिव्याङ्गना। इयमेवाऽत्र नायिका। अस्यामुर्वश्यां नृपमहेन्द्रयोरुभयोरपि अभिलाषः। परमुर्वशी इन्द्र विहाय राजानं पुरूरवसमेवेच्छति। कथमपि तां लब्धम् इन्द्रः एतयोर्मध्ये अन्तरायरूपेण आगत्य राज्ञः पुरूरवसः वेषेण तामपहर्तुमपि सन्नद्धो भवति। एतन्मध्ये यदा राजा आगच्छति, तदा महेन्द्रस्य च्छले सर्वे जानन्ति। ततः उभयोः उर्वश्याः कृते युद्धस्सञ्जायते। अन्ते नारदमुनिरागत्य एतयोर्युद्धं निवारयति। उर्वशी राजानमेव परिणेतुमभिलषति, न पुनर्महेन्द्रम्। तत्पश्चादनयोः परिणयो भवति। अत्र महेन्द्रः अनिच्छन्तीमुर्वशीमीहते। परं सा अमुं नेच्छति। अथापीन्द्रः तस्यां स्वकीयां रतिं प्रकटयतीति कृत्वा रतेरेकमुखत्वात् शृङ्गाराभासः अत्र परिदृश्यते। नृपः पुरूरवा अपि दिव्यामप्सरस्स्त्रिमुर्वशी मृगवदीहते इति उर्वशीसार्वभौमेहामृगः इति नामधेयमन्वर्थं भवति। उर्वशीकथा वेदपुराणादिषु वर्तते इति कृत्वा तत्र राज्ञः पुरूरवसः प्रेम इति कथया च ख्याताख्यातं मिश्रं वृत्तं भवति। अत्र चत्वारोऽङ्काः वर्तन्ते। मुखप्रतिमुखनिर्वहणसन्धयस्त्रयः अत्र विद्यन्ते। पुरूरवाः देवेन्द्रं जित्वा उर्वशी नायिकां पर्यणैषीत् इति कृत्वा स एव नायकः। वीररौद्रयोः रसयोः समागमोऽत्र दृश्यते। शृङ्गाराभासोऽपि मध्ये परिदृश्यते। परमत्र वीररस एव मुख्यः। रौद्रशृङ्गाराभासौ तस्य अङ्गरसौ भवतः।

**उर्वशीपुरूरवसोः कथायाः आकरः**

उर्वशीपुरूरवसोः कथा इदंप्रथमतया ऋग्वेदे एव परिदृश्यते। ततः पद्मपुराणे, भागवते, महाभारते अपि लभ्यते। एवम् उर्वशीपुरूरवसोः कथा वेदपुराणादिषु प्रसिद्धाऽस्ति। तामेव कथामनुसृत्य अयं च वेङ्कामात्यः उर्वशीसार्वभौमेहामृगं रचयामासेति ज्ञायते।

**उर्वशीसार्वभौमेहामृगस्य कथा**

राजा पुरूरवाः इन्द्रसखा। एकदा सः देवलोकं जगाम। देवेन्द्रसभायां देवाप्सराः उर्वशी ननर्त। तस्याः अपूर्व रूपसौन्दर्यं दृष्ट्वा तस्यां प्रीतिः समजनि। साप्युर्वशी राज्ञः अनुपमं रूपसौन्दर्यं गुणं च ज्ञात्वा तस्मिन् राज्ञि अनुरक्ता बभूव। परम् उभावपि स्वीयमभिलाषं रहस्येव न्यधाताम्। परं देवेन्द्रोऽपि उर्वश्यामनुरक्तस्सन तस्याः देहसङ्गार्थमागच्छति। उर्वशी सख्या सह राज्ञः विषयमेव कथयन्ती वर्तते। तयोस्संभाषणं रहसि इन्द्रः शृणोति। परं सा मां प्रत्येव वदतीति इन्द्रः मनुते। सा मय्यनुरक्ता वर्तते इति चेत् मदीयं भाग्यमित्येव जानाति। संभाषणान्ते सा राजानमभिलषतीति ज्ञात्वा क्रुद्धो भवति। चित्ररथः तं निवार्य उपायमेकं सूचयति। राजवेषेण उर्वशी सङ्गच्छतु भवानिति चित्ररथवचनानुसारात् पुरूरवसः वेषं धृत्वा उर्वशीसमीपं गच्छति। तं दृष्ट्वा राजैवागत इति उर्वशी लज्जिता भवति। तस्याः सखी तमुपचरितुं गच्छति। किनतु सैव करोत्विति राजा सूचयति। तदनुसारात् तमुपचरितुं सन्नद्धा भवति उर्वशी। एतस्मिन् समये एव राजा पुरूरवाः तत्रागच्छति। उभौ पुरूरवसौ दृष्ट्वा उर्वशी किमपि कर्तुमजानन्ती तिष्ठति। राजा स्वीयवेषधारिणं महेन्द्रं उर्वशीमपहर्तुं स्वकीयं वेषं धृत्वा आगतं राक्षसमिति मत्वा तं हन्तुमुद्युक्तः। राजवेषधारी इन्द्रोऽपि राजानं हन्तुं झटिति गच्छति। एतस्मिन्नन्तते नारायणमुनेराज्ञां स्वीकृत्य आगतः कश्चन तापसः अयं राजा पुरूरवाः अयं च राजवेषधारी इन्द्रः इति उभयोः निजस्वरूपं उर्वशी सखीं च कथयति। तदा उर्वशी व्याकुला भीता च भवति। इन्द्रः राजवेषमपहाय स्वीयरूपेणैव राज्ञा पुरूरवसा सह योद्धुं प्रक्रमते। भीकरं तुमुलं प्रचलति। एतस्मिन्नेव समये उभयोर्मध्ये नारदमुनिरागत्य-उर्वशी सर्वसाधारणस्त्री। तस्याः कृते उभयोर्युद्धं न समीचीनम्। सा यमिच्छति तस्यैव पत्नी सा भवति। इयं नारायणमुनेराज्ञा इति कथयति। उर्वशी राजानमेव वृणुते। इन्द्रः तस्य सेना च स्वर्गं गच्छति उर्वशीपुरूरवसौ नारदमुनिं नमस्कुरुतः। गुणसंपन्नम् आत्मजं लभस्वेति राजानमनुगृह्णाति मुनिः इयं च कथा अत्र ईहामृगे सुनिबद्धाऽस्ति।

**संदर्भग्रन्थाः**


1. History of Mysore, (1704-1766) Volume II By C. Hayavadana Rao, Chapter-XIII, Krishnaraja Wodeyar-II, Printed at the Govt. Press, Bangalore 1946, pp. 476-482.
2. Pradhana Venkappiah-Poet and Play Write, By M.P.L. Sastry, Published in the Quarterly Journal of the mythic Society Vol. XXXI July 1940 Bangalore, pp. 36-52.
3. URVASISARVADHOUMEHAMRGAH OF VENAKAMATYA Edited by Vidwan T.V. Sathyanarayana, Oriental Research Institute University of Mysore, 1993.
4. श्रीविश्वनाथप्रणीतः साहित्यदर्पणः (चौखम्बाविद्याभवनम्)

# आचार्यराधावल्लभत्रिपाठिविरचितस्य प्रेक्षणसप्तकस्याभिनवत्वं समीक्षणञ्च

डॉ. सुमनकुमारझा

समाजेन सह साहित्यस्य कश्चन विशिष्ट एव सम्बन्धः। साहित्यं समाजस्य प्रतिबिम्बमिति स्वीक्रियते समालोचकैः। समाजे विद्यमानानां सर्वेषां प्राणिनां, जीव-जन्तूनां, स्थावरजङ्गमपदार्थानां, नवानां सामाजिक-समस्यानाञ्च चित्रणं तत्तत्सन्दर्भेषु, प्रसङ्गेषु च क्रियते कविभिः, स्वीयरचनासु , समीक्ष्यते च समालोचकैः समीक्षाग्रन्थेषु । समाजस्य निर्माणं सर्वेषां प्राणिनां साहचर्येणैव जायते। अतो विविधभाषासु रचितेषु साहित्यग्रन्थेषु सर्वेषां प्राणिनां , पदार्थानां, प्रकृत्याश्च निरूपणं क्रियत एव साहित्यकारैः कविभिश्च। वस्तुतः साहित्यकाराणामिदं सामाजिकं सास्कृतिकं मानवीयञ्च दायित्वं यत्ते समाजस्य सर्वेषां प्राणिनाम् अधिकार-कर्त्तव्ययोर्निर्भीकरूपेण सहजरूपेण च चित्रणं कुर्युः। तथ्यमिदं प्रायशः सर्वासु भाषासु विरचितेषु साहित्यग्रन्थेषु सर्वात्मना प्राप्यते। परं संस्कृतसाहित्ये समाजस्य, मानवजीवनस्य प्रकृतिजीवनस्य च विविधपक्षाणां चित्रणं भारतीयपरम्परानुसारं, भारतीयसमाजस्य मूल्यानुसारञ्च विधिनिषेधवाक्यमाध्यमेन कृतमस्ति।

समग्रसंस्कृतसाहित्ये नाट्यसाहित्यस्य वैशिष्ट्यं सर्वथा प्रथितमेव। 'नाटकान्तं कवित्वम्' इत्यभिरूपोक्तिः सर्वथा याथार्थ्यं भजते। दिवानिशं दुःखार्तानां श्रमार्तानां चिन्तातुराणाञ्च जनानां विश्रमाय मनोरञ्जनसाधनं किमप्यपेक्षत एवेति निश्चप्रचम्। विषयेऽस्मिन् नास्ति संशीतिलेशः। तत्र सुरुचिमद्भ्यो विद्वद्भ्यः शिष्टमुत्कृष्टञ्च साधनं वरमिति कृत्वोच्यते-

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**
**व्यसनेन तु मूर्खाणां निद्रया कलहेन वा॥**

काव्येषु च वामनानुसारेण **सन्दर्भेषु दशरूपकं श्रेयः**। अभिनवगुप्तपादाचार्यदिशा च रूपकात्मकं दृश्यमेव वस्तुतः काव्यम्। रूपकेषु हि लोकवृत्तानुकरणात्मकेषु जन आत्मनोऽनुभवानेव साक्षात्कुरुते, अतः कविकुलगुरुणा कालिदासेन **नाट्यं हि भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्** इति शब्दैः प्रशस्तं तत्। **काव्येषु नाटकं रम्यमित्यपि** स्वीक्रियत एव समालोचकैः। चिरन्तनकालात् संस्कृत एव कवीनां रूपकसर्जने विशेषेण प्रवृत्तिर्वर्तते। वर्तमाने च समये सत्स्वपि चलच्चित्रदूरदर्शनप्रभृतिषु

मनोरञ्जनसाधनेषु विविधभाषासु रूपकाणि विरच्यन्ते प्रयुज्यन्ते च यथ.वसरम्। संस्कृतस्य विरलप्रचारेऽपि वर्तमानकालेऽन्यविधाभिः सह रूपकाणि संस्कृतभाषायां विरच्यन्ते प्रकाश्यन्ते चापि।

प्राचीननाट्यसाहित्यादारभ्य अर्वाचीननाट्यसाहित्यं यावद् विद्यते नाट्यसर्जनस्येका सुदीर्घा परम्परा। यथा प्राचीनसंस्कृतसाहित्ये महाकविभास-कालिदास-शूद्रक-हर्षवर्धन- भट्टनारायण-विशाखदत्त-भवभूति-राजशेखरप्रभृतयो नाट्यकाराः सञ्जाताः। तथैव आधुनिकसंस्कृतसाहित्येऽपि नैके नाट्यप्रणेतार आविर्भूता विद्यन्ते। यथा महालिङ्गशास्त्रि-वेङ्कटराघवन-जीवन्यायतीर्थ-श्रीधरभास्करवर्णेकर-मथुराप्रसाद-दीक्षित-बलभद्रप्रसादशास्त्रि-रमाकान्तशुक्ल-अभिराजराजेन्द्रमिश्र-शिवजी उपाध्यायप्रभृतयोऽनेके साहित्यकाराः रूपकसर्जनक्षेत्रे लब्धप्रतिष्ठिताः।

तस्यां परम्परायां ख्यातनामा आचार्यराधावल्लभत्रिपाठिमहाभागोऽपि प्रतिष्ठावहः। त्रिपाठिमहोदयस्य प्रेमपीयूषम्, तण्डुलप्रस्थीयम्, प्रेक्षणसप्तकञ्चेति दृश्यकाव्यानि सन्ति। एतेषु प्रेमपीयूषं पूर्णं नाटकं तण्डुलप्रस्थीयञ्च प्रकरणमस्ति। प्रेक्षणसप्तकमपि दृश्यकाव्यमेव, यस्य गणना रूपकस्यावान्तरभेदेषु उपरूपकेषु वा क्रियते। तल्लक्षणं भोजराजस्यशृङ्गारप्रकाशे रामचन्द्रगुणचन्द्रयोर्नाट्यदर्पणे चेत्थं प्राप्यते-

**रथ्यासमाजचत्वरसुरालयादौ प्रवर्त्यते बहुभिः।**
**पात्रविशेषैर्यत् तत् प्रेक्षणकं कामदहनादि॥**[1]

'प्रेक्षणकं रथ्यासु समाजेषु (मेलायां लोकोत्सवेषु वा) चत्वरेषु सुरालयेष्वपि अभिनेतुं शक्यते। वस्तुत आचार्यैर्लोकनाट्यपरम्पराया एव संग्रहः प्रेक्षणकं लक्षयद्भिरकारि। दक्षिणभारतेषु प्रसिद्धं सम्प्रत्यपि प्रचलितं 'वीथीनाट्यकम्' तथैव यक्षगानप्रभृतीनि लोकनाट्यानि प्रेक्षणकेन संवदन्ति। आधुनिका 'नुक्कड़नाटक' (स्ट्रीटप्ले) इति यदामनन्ति, तदपि वस्तुतः प्रेक्षणकस्यैव नवोत्थानम्' इति नाट्यग्रन्थस्य भूमिकायां स्वयमेव लिखति नाट्यप्रणेता।[2]

निरन्तरव्यापिनि जीवनसंघर्षे व्यापृतस्य जनस्य क्वाद्य महानाटकादि- दीर्घकालापेक्षिविस्तृत-नाट्यप्रेक्षणावकाश इति सर्वस्मै एवैकाङ्कमेव रूपकं रोचते, अतो लेखकोऽयं लोकरुचिमनुरुन्धानस्तत्रैव साभिनिवेशः। सहृदयहृदयानन्दनिष्यन्दो रस एव साहित्ये सकलप्रयोजनमौलिभूत इति पुरातनी साहित्यसिद्धान्तसरणिः। संघर्षात्मके जीवने द्वन्द्वात्मकमनोभावानां प्रकाशनं नाट्यविषयः। युगप्रवृत्त्या प्रायेण कविर्व्यवहरतीति कृत्वा प्रकृतलेखकोऽपि तमेव पन्थानमनुसरति। गतः स कालो यदा धार्मिको भावो, राज्ञाम् अन्तःपुरकथाभावो, तेषां प्रेमकथावर्णनं, विजयवर्णनं वा ग्रन्थकृतां हृदयभूमिं प्राधान्येनास्पृशत्। वर्तमानं युगं तु बौद्धिकं युगम्। सामयिकजीवने निहितदृष्टिः, समाजे जायमानानां प्रवृत्तीनां, घटनानां, नवीन-समस्यानां, नवीन-प्रश्नानां, सामाजिकार्थिक-धार्मिक-राजनीतिक- सांस्कृतिक-भौगोलिक-नैतिक-व्यावहारिक-प्रवृत्तीनाञ्च निरूपणम्, तेषां सर्वेषां प्रश्नानां तार्किकं, व्यावहारिकं, युगानुकूलं, समयानुकूलं

---

1. शृङ्गारप्रकाशः-11/31
2. प्रेक्षणसप्तकम्-भूमिकातः

च समाधानमपेक्षते। अत आधुनिकाः कवयः, साहित्यकाराः, काव्यप्रणेतारः, साहित्यसमालोचकाश्च भावबीजतया स्वीयरचनासु तादृशानेव प्रश्नान् प्रस्तोतव्यत्वेन विचिन्वन्ति।

**प्रेक्षणसप्तकमिति** रूपकसंग्रहे प्रथमं प्रेक्षणकं **'सोमप्रभम्'** इति शीर्षकाङ्कितम्। अस्मिन् रूपके श्वसुराभ्यां प्रतार्यमाणाया वध्वा व्यथा। समाजे केचन यथार्थजीवनं प्रत्युदासीनाः सन्तः केवलं स्वार्थ-साधनायैव चिन्तयन्ति। परेषां व्यथां कथां वेदनां न वा शृण्वन्ति, न च ज्ञातुं प्रयतन्ते।

समाजे परिवारे वा नारीं प्रति कीदृशं चिन्तनं, तस्य चिन्तनस्य कीदृशः परिणामः? एतत्सर्वमस्मिन् रूपके कविना चित्रितभ्। अनेन मानवीय-संवेदनायाः मनोभावानाञ्च विकासो भवेदित्याशा। परिवारे नार्याः सम्माननं भवतु, समाजे पुत्रीं प्रति या मिथ्या धारणाऽस्ति, सा धारणाऽपि परिवर्तनीयाऽस्माभिः। नार्या यथार्थरूपं परिचिनोतु समाज इत्यपि निहितार्थः। तत्र कथयति सोमप्रभा- **'अहं पुत्री जाता इति हेतोः सा कुप्यति। नैवं किम् ?** विमलायाः श्वश्रूर्विमलां सर्वदा ताडयति, भर्त्सयति, मर्मघातिभिः कटुवचनैराक्षिपति। तस्याः पितृपादं सदैव कदर्थयति, परं विमला सर्वं मौनेन श्रान्त्या च, मदीयं भागधेयमिति मत्वा स्वीकरोति, सहते च। तस्याः श्वश्रूः कथयति-

'तव पिता यावन्तं यौतुकराशिं प्रतिज्ञातवान् तावतोऽर्धमेव समर्पितवान्। को निर्यातयिष्यति ऋणं तस्य ? वद, वद, को निर्यातयिष्यति? वधूर्भृतिं करिष्यति इति किं न कथितमस्माभिः प्रागेव विवाहात् ? सार्धलक्ष्यरूप्यकाण्यन्यत्र सम्बन्धेनास्माभिः प्राप्तव्यान्यासन्।'[1]

अहो नृशंसता यौतुकलोलुपानां निष्ठुरता स्वीयां वधूं प्रति। समाजे अद्यापि नार्याः पुत्र्याश्च साकमेतादृशो व्यवहारः सङ्गच्छते, जनाः स्वकीयां वधूं, स्व-भार्यां ज्वालयन्ति, घातयन्ति च। नाट्यकारस्यापि इयमेव वेदना। स्वकीयं मनोभावमित्थं प्रकटयति त्रिपाठिमहोदयः-

**क्षणे क्षणे प्रवर्धते धनाय हिंस्रता खरै-**
**र्विलोप्यतेऽतिनिर्दयं च जन्तुभिर्मनुष्यता।**
**विभाजितं जगद्द्विधा, निहन्यते च धातकै-**
**रतीव दैन्यमागतास्ति साधुता मनुष्यता।।** [2]

**'मेघसन्देशम्'** अस्य प्रेक्षणसंग्रहस्य द्वितीयं रूपकम्। अत्र कश्चन बालको मेघाय सन्देशं प्रेषयितुमिच्छति। अनेन प्रेक्षणकेन कविना प्रकृत्या सह मानवस्य रागात्मकः सम्बन्धः, पर्यावरणसंरक्षणं, पादपानां वृक्षाणाञ्च संवर्धनं, मानवजीवने वर्षाजलस्य आवश्यकता, राष्ट्रविकासाय वृष्टेर्महत्त्वमित्यादयो विषयाः चित्रिताः। अत्र कविना नवीनमेव वस्तु समावेशितम्। यथा कविर्मेघं निवेदयत्यागमनाय-

**एहि रे! एहि रे! कृष्णमेघ समुपेहि रे!**
**मम नगरं समुपेहि रे! देहि रे! देहि रे! अलमये जलं देहि रे।**

1. तत्रैव-पृ0 10
2. तत्रैव-पृ. 11

**त्वामाह्वयतीह धरेयं विकला, प्रतीक्षते त्वां जनता सकला,**
**गर्ज गर्ज वर्ष वर्ष, रसं निधेहि रे! एहि रे! एहि रे! कृष्णमेघ समुपेहि रे![1]**

प्रकृत्या सह मानवसम्बन्धमपि निर्दिशति-

**निम्बवृक्ष ! नय मे सन्देशम्, समेतु मेघोऽस्माकं देशम्।**
**आतप-जनितं हरतु क्लेशम्, निम्बवृक्ष ! नय मे सन्देशम्।।[2]**

एतदेव भरतवाक्येनापि निरूपयति नाट्यकारः-

**काले वर्षतु देवो भातु च सौरभ-समन्विता वसुधा।**
**पल्लविता कोरकिता पुष्पैराढ्या लता विलसेत्।।[3]**

संग्रहस्यास्य तृतीयं प्रेक्षणकमस्ति- **धीवरशाकुन्तलम्**। अत्र धीवर एव नायकत्वेन प्रतिष्ठां प्रापित इति अभिनवत्वं कवेः। शिल्पदृष्ट्या कथावस्तु अभिज्ञानशाकुन्तलनाटकाद् गृहीतं, परं तत्र कविना स्व-कल्पनाशक्त्या, अभिनवचिन्तनेन, युगानुरूपं सामाजिकसन्दर्भानुरूपं कथानके नवत्वं साभिनिवेशितम्। अत्र समाजे दीनजनानां कीदृशी स्थितिः, तेषां कृते कथं त्रासः, स्वेच्छया जीवनव्यवहारे कीदृशः संघर्ष इत्यादयो विषयाः निर्दिष्टाः। तत्र सामान्यजनानां काऽभिलाषा, सन्दर्भेऽस्मिन् कथयति धीवरः- 'अहो प्रशस्ता राजमार्गाः, अहो उत्तुङ्गाः प्रासादाः। अपि नाम ममापि एकं गृहं स्यात्, अपि नाम अहमिदानीं स्वायां शकुन्तलां प्राप्नुयाम्।'[4]

समाजे ये रक्षकाः, त एव यदि भक्षकाः सञ्जाताः, तर्हि सामान्य-जनता कथं सुरक्षिता स्यात्, केन वा संरक्षिता स्यात्। य आरक्षकाः सन्ति त उत्कोचं स्वीकुर्वन्ति चेत्तेषामुपरि कथं विश्वासः कर्तुं शक्यते। यथा च कथयति धीवरः-

**नाहं मूल्यं दास्यामि, न वा सुरां पातुमिच्छामि।**
**यूयं सर्वे तस्करा मम अवशिष्टमपि द्रविणमपहर्तुमिच्छथ।**

दीनजनानां कीदृशी दशेत्यपि विवृणोति धीवरः- मा मां ताडयत। मुञ्चत माम्। नामसाम्यमपि भवितुमर्हति। कोऽत्र मे दोषः। धीवरः स्वप्रेमिकां शकुन्तलां प्रति कथयति- हस्तिनापुरं तदङ्गुलीयकं विक्रीय महद्धनं प्राप्य तव पित्रे तत्समर्प्य त्वां प्राप्स्यामीति मनोरथेनाहमत्र समायातः। अत्र तु विद्यते महांस्त्रासः पदे पद आक्रम्यते मादृशो दीनो जनः।[1]

**'मुक्तिः'** संग्रहस्यास्य चतुर्थं रूपकम्। मुक्तिः प्रतीकात्मकं प्रहसनमेकम्, हास्यपूर्णं प्रेक्षणकञ्च विद्यते। प्रेक्षणकमिदं मनोविनोद-रीत्या सन्देशोऽयं वितरति यत् स्वपरिवारं समाजं च प्रति स्वदायित्त्वनिर्वहण

1. तत्रैव-पृ0 1
2. तत्रैव-पृ0 21
3. प्रेक्षणसप्तकम्-पृ0 23
4. प्रेक्षणसप्तकम्-पृ0 27

एव मानवानां मुक्तिः। साम्प्रतिकसमाजव्यवस्थां, राजव्यवस्थां, लोकतन्त्रव्यवस्थां चाधृत्य, मानवस्य सङ्घर्ष चाधिकृत्य गभीरान् प्रश्नानुपस्थापयति रूपकमिदम्। यथा च रूपकस्य प्रस्तावनायां लिखति त्रिपाठिमहोदयः-

**स्वातन्त्र्येऽपि समागते विदलितो नो पारतन्त्र्यात्मको भावो,**
**भास्वति सत्यपि प्रभवति क्लेशाय गाढं तमः।**

**सङ्कल्पः किल मुक्तये प्रतिजनं चेतः सुसञ्जायतां।**
**मुक्तेरेष तथा भवत्वभिनयः सत्यान्वितो मुक्तिदः॥[2]**

जनानां मुक्तेर्याचनया प्रेक्षणकं समाप्यते, यथा-

**मुक्तिर्भवतु जनानां नाट्यं व्यञ्जनमिव स्वदतामिदम्।**
**लावण्यं च स्नेहो विलसतु रङ्गे गृहे नगरे॥**

इत्थं रूपकस्यास्य कथावस्तु सर्वथा सामयिकम्। पात्राणां कल्पितत्वेनापि कथ्यं तु यथार्थमेव।

**'मशकधानी'** इति शीर्षकेण निबद्धमस्ति संग्रहस्यास्य पञ्चमं रूपकम्। इदमपि हास्यव्यङ्ग्यपूर्णं प्रतीकात्मकञ्च प्रेक्षणकम्। अत्रापि साम्प्रतिक-समाजव्यवस्थां, लोकतन्त्रव्यवस्थां, सत्ता-शासनतन्त्रं, नेतृन्, ऐश्वर्यमदावलिप्तान् जनान्, श्रेष्ठिनश्च प्रति दीनजनानां, श्रमिकाणां, द्ररिद्रजनानां च सङ्घर्षकथा, तादृशानां जनानां व्यथा वेदना वा। यथा ऐश्वर्यमदावलिप्ताः श्रेष्ठिनः सामन्ता वा श्रमिकाणां दरिद्राणां रक्तं चूषन्ति, तथाऽयं मशको रक्तमस्माकं चूषति।

अत्र मशको बिम्बत्वेन प्रतीकत्वेन च गृहीतः। सम्प्रति मशकसदृशानां दुष्टजनानां संख्या एकाकी न अपितु अनन्ता विद्यते। यथा चोच्यते नाट्यकारेण- **न केवलम् एक एव, अये, इतोऽपि मशकास्ततोऽपि मशकाः। इदानीं मशकमयं यमस्तं जगदवलोकयामि। नास्ति कापि गतिः। नास्ति कुत्रापि मोक्षः।**

**मशकश्चषकं मत्वा, देहं चूषति सुरामिव सुरापः।**
**पायं पायं रक्तं मत्तो बिभ्यति च न स मत्तः॥[3]**

वस्तुतः समाजे राष्ट्रेऽपि मशकसदृशा जनाः सन्ति, ये सरलजनानां, दीन-हीनजनानां शोषणं कुर्वन्ति, अत तेभ्यः कथमात्मानं रक्षयेदिति चिन्ता प्रवर्तते। तत्रैतेभ्यो मशकेभ्य

आत्मानं त्रातुं कश्चिदुपायो नूनमेव चिन्तनीयः। अन्ते च भरतवाक्येन कविः स्वमन्तव्यमित्थं प्रस्तौति-

---

1. तत्रैव-पृ0 34
2. प्रेक्षणसप्तकम्-पृ0 37
3. तत्रैव-पृ0 46

**अपैतु मशकावली प्रणश्यतु च पापावली।**
**गृहे गृहे प्रविभासतां संस्कृतस्य दीपावली।।**[1]

अनेन रूपकेणापि नैके गभीराः प्रश्नाः समुपस्थिताः, येषां समाधानमेव रूपकस्योद्देश्यम्। अत्र ये प्रभुत्वशालिनः सन्ति ते कथं निर्धनानां, असहायानां, वञ्चितानां, शोषितानां शोषणं कुर्वन्तीति प्रदर्शितम्, समुद्घाटितं च नवीनं तथ्यम्। तत्र प्रेक्षणकस्यास्य प्रारम्भ एव, प्रस्तावनायां निरूपयति त्रिपाठिमहोदयः-

**कल्याणानां निधात्री दहति कलिमलं कल्मषं या विधात्री,**
**या सन्धात्री प्राप्ते मरुभुवि नितरां शीतलानां रसानाम्।**
**आधात्री काव्य-शास्त्रैर्ललितविलसितज्ञानदीपप्रभाणां**
**भव्यं सा भारतेऽस्मिन् दिशतु नवयुगं मङ्गलं संस्कृतावाक्।।**[2]

षष्ठं रूपकं **'गणेशपूजन'**मपि समाजे व्याप्तमन्धविश्वासं प्रति व्यङ्ग्यमस्ति। भगवतो गणेशस्य पूजनव्याजेन समाजे परिव्याप्तानां छल-प्रपञ्चानां छद्मवेषधारिणां जनानां दुर्व्यवहाराणां चोद्घाटनमनेन प्रेक्षणकेन जातम्। यथा च प्रेक्षणके लिखति त्रिपाठिमहोदयः-

'अहं गणाधिपतिः। नाहं मन्दिरेषु निवसामि। बुद्धेरहं विधाता। जनानां निष्कलुषबुद्धावहं वसामि। तेषां जनानां त्वयावमानना व्यधायि। इदानीं त एव जनाः प्रसादनीयाः।' तत्र छद्मजनः स्वीकरोति- एषोऽहं बुलाकीरामः स्वीकरोमि यन्मया गणेशोत्सवव्याजेन महान् धनराशिः प्रतिवर्षं सञ्चितः, तस्य सर्वस्य व्ययो मया गणेशोत्सवायोजने न कृतः। स राशिर्मया वित्तकोषे स्थापितः। तस्य सर्वस्य राशेरहं विवरणमत्र भवतां पूज्यजनानां पुरतः श्व एव उपस्थापयिष्यामि। अहं गणेशोत्सवसमितेः सचिवपदमपि परित्यजामि। श्व एव समितेरुपवेशनं विधाय प्राजातान्त्रिकेन विधिना निर्वाचनं कारयिष्यामि सचिवादिपदानाम्।[4]

अनेन भरतवाक्येन रूपकमिदं पूर्णतां याति। यथा-

**जय विघ्नविनायक जय गणनायक जय जय बुद्धिनिधे,**
**जय गौरीसुत जय मतिदातर्जय जयजन सप्रतिनिधे।**

**अभयं कुरु सर्वेषां नः कुशलं कर्मणि सर्वविधे,**
**ज्ञानविधे जय विश्वविधे जय जय हे माङ्गल्यनिधे।।**

संग्रहस्यास्य सप्तममन्तिमञ्च रूपकं प्रतीक्षासंज्ञम् । प्रेक्षणकमिदं मध्यवर्गीयपरिवारस्य यथार्थजीवनं प्रस्तौति। अस्मिन् रूपके प्रणेत्रा वर्तमानयुगानुरूपा सामान्यजनानां मनोवैज्ञानिकी, सामाजिकी च समस्या

---

1. तत्रैव-पृ0 51
2. तत्रैव-पृ0 47
3. तत्रैव-पृ0 58
4. तत्रैव-पृ0 59

प्रस्तुतेति सामाजिकसमस्याप्रधानमिदं सर्वथाऽभिनवं, मौलिकं, सामाजिकं, पारिवारिकं च विषयवस्तु निर्वहति। विषयवस्तुनः विकासो रूपकस्य प्रस्तावनया भवति। यथा-

**प्रतीक्षन्ते सर्वे किमपि परमं धाम यदिदं,**
**प्रयान्त्येतां, सर्वाः सकलकरणश्रान्तिविगमात्।**

**प्रजा यस्माज्जाता लयमपि च यस्मिन् खलु गताः**
**प्रकृष्टं तत् तत्त्वं भवतु विदितं चेह लसितम्।।[1]**

वस्तुतो मध्यवर्गीयपरिवारे पुत्रीं नीत्वा कीदृशी चिन्ता भवति, तस्याः संरक्षणस्य संवर्द्धनस्य च। अनेन ज्ञायते यदिदानीमपि महिलासुरक्षा एका गभीरा समस्या वर्तते समाजाय, राष्ट्राय च। यस्याः समाधानं नूनं भवतु इत्यस्ति रूपकस्यास्य लक्ष्यम्। दुर्जनैः, दुष्टप्रवृत्तिजनैः कन्या रक्षणीया इत्यपि विचारविषयः। यथा चोच्यते कविनाऽनेन भरतवाक्येन-

**दुर्जनैर्जल्पितं नान्यथा कल्प्यताम्, कल्पना स्यात् सदा मङ्गलालङ्कृता।**
**स्यात् प्रकाशोऽक्षयो जीवने झङ्कृता भारती भामती चास्तु सौख्यप्रदा।।[2]**

अस्मिन् रूपके यत्र तत्र प्रणेता मूकाभिनयं प्रकाशप्रक्षेपणागमननिर्गमनं सूचनं च निर्दिशति। रूपकप्रणेतुरयं संस्कृतनाट्यप्रणयने नवः प्रयोग इति स्वीकरणे तु न कश्चन सङ्कोचः। कथानकञ्चात्र समसामयिक-समस्यानुरूपमिति वैशिष्ट्यमेव।

अस्य रूपकसंग्रहस्य भाषा विषयानुसारं, निरूपितभावानुसारं, चित्रितपात्रानुसारं नितरां मसृणा सुबोधावसरानुकूला च। प्रेक्षणसंग्रहस्य प्रणेता स्वयं काव्यशास्त्रविचक्षणो, नाट्यशास्त्रमर्मज्ञः, साहित्यविद्याविशेषज्ञोऽतः तदनुरूपमेव सम्पूर्णं रङ्गविधानं निर्दिशति, काव्यसौन्दर्यं चान्तर्भावयति। नाट्यशास्त्रीयं विधिविधानं प्रेक्षणकेष्वनुस्यूतमस्ति इति नितरामेव वर्धयति काव्यशोभां सौन्दर्यञ्च। प्रेक्षणकेषु अभिनयस्य प्राधान्यं कथ्यानाञ्च वैशिष्ट्यं संवादैः परिलक्ष्यते। पाठकेषु दर्शकेषु च भावाबोधो नाट्यदर्शनात्, श्रवणादनन्तरं शीघ्रमेव जायते। नवीनोपकरणानां प्रयोगेण, दृश्योपयोगि प्रकाशप्रक्षेपणादिनिर्देशनेन, रूपकाणि सर्वाणि शिल्पदृष्ट्या, प्रतीयमानार्थप्रकाशनदृष्ट्या, चाभिनवानि सन्ति। समसामयिकयुगजीवनवर्तिवृत्तमधिकृत्य, साम्प्रतिक-लोकतन्त्रव्यवस्थामाधृत्य, सामाजिकव्यवस्थामधि-कृत्य च रचितान्येतानि प्रेक्षणकानि सहृदयसामाजिकेभ्यो मनोहराणि सन्ति। विविधभावैः संवलितमिदं प्रेक्षणसप्तकं नूनमेव संस्कृतनाट्यसाहित्यस्याभिनवोऽलङ्कार इत्यत्र नास्ति संशीतिलेशः।

इत्थं प्रेक्षणसप्तकमिदमभिनवः प्रयोगो राधावल्लभत्रिपाठिमहोदयस्य संस्कृतरूपकसाहित्ये, विशेषत अर्वाचीनसंस्कृतनाट्यसाहित्ये। अभिनवप्रयोगधर्मानुरूपमत्रापि त्रिपाठिमहोदयस्याभिनवत्वं दृश्यते। कृतिकारो नवीनानां रूपकविधानां सर्जने सूक्ष्मपर्यवेक्षक इव स्ववैशिष्ट्यं स्थापयति। वस्तुतः साहित्यसमीक्षकत्वेन यद् वैदुष्यं साहित्यजगति प्रथितमस्ति राधावल्लभत्रिपाठिनः तदप्यनेन परिलक्ष्यते। नाट्यप्रणेतुः यथार्थादर्शदृष्ट्योः सन्तुलिता पद्धतिः युगधर्मानुकूला, समीक्षकेभ्यः सहृदयसामाजिकेभ्योऽ-नुकरणीया च विद्यते। रूपकमिदं न केवलं नवीनविधादृष्ट्या, साहित्यिकतत्त्वदृष्ट्या एवान्यतममस्ति अपितु समाजे व्याप्तानां कुरीतीनाम्, अंधविश्वासानां निरूपणदृष्ट्याऽपि नवत्वं धार्यते।

1. तत्रैव-पृ0 61
2. तत्रैव-पृ0 71

# कविराज राजशेखर का काव्यप्रणयन चातुर्य

**प्रो. रमेश कुमार पाण्डेय**

कविराज राजशेखर के जीवनवृत्त से हम विशेषत: परिचित हैं। उन्होंने अपनी जीवनी नाटकों की प्रस्तावना में विस्तार के साथ दी है। ये यायावर वंश में उत्पन्न हुए थे। यह वंश कवियों के प्रसव के लिए कल्पतरु था। इसी कुल को अकालजलद, सुरानन्द, तरल, कविराज आदि अनेक कवियों ने अलंकृत किया था। ये महाराष्ट्र-चूडामणि कविवर अकाल-जलद के प्रपौत्र थे तथा दुर्दुक और शीलवती के पुत्र थे। इन्होंने अवन्ति-सुन्दरी नामक चौहानवंशी क्षत्रियललना से विवाह किया था। अवन्ति-सुन्दरी बड़ी विदुषी थी, संस्कृत भाषा की ही नहीं, बल्कि प्राकृत भाषा का भी। राजशेखर ने काव्य-मीमांसा में 'पाक' के विषय में इनके विशिष्ट मत का उल्लेख किया है। 'पाक' के विषय में आचार्य वामन का कथन है कि पदों का विन्यास इतना मंजुल होना चाहिए कि वे अपने स्थान से हटाए न जा सकें। इस पर अवन्तिसुन्दरी का कथन है कि यह तो अशक्ति है--कवि की कमजोरी है कि वह एक पद को हटाकर उसके स्थान पर दूसरे अनुरूप पद का प्रयोग नहीं कर सकता। हेमचन्द्र ने देशी-नाम-माला में अवन्तिसुन्दी के देशी शब्द कोष का उल्लेख किया है तथा उनके द्वारा कई शब्दों के जो नए अर्थ किये गये हैं उनका भी उल्लेख किया है। प्राकृत कविता की परख और उसमें रुचि होने का प्रबल प्रमाण इस घटना से भी हो सकता है कि इन्हीं के आदेश से 'कर्पूरमंजरी' का प्रथम अभिनय किया गया था। इस प्रकार राजशेखर ने अपने पूर्वजों से कविता की दिव्य प्रतिभा को पैतृक रिक्‌थ के रूप में प्राप्त किया था।

ये महाराष्ट्र के, सम्भवत: विदर्भ के निवासी थे, परन्तु कान्यकुब्ज के राजा के उपाध्याय पद पर विराजते थे। इनके आश्रयदाता का नाम महेंद्रपाल था, जो कन्नौज के प्रतिहारवंशी राजाओं में विशेष गौरवशाली माना जाता है।[1] इन्हीं के आदेश से राजशेखर ने बालरामायण का अभिनय प्रस्तुत किया था। कुछ दिनों के लिए ये लाट नरेश के यहाँ चले गये थे, जिनकी अध्यक्षता में 'विद्धशालभंजिका' का अभिनय किया गया था। यहाँ से लौटकर ये फिर कान्यकुब्ज आये और महेंद्रपाल के पुत्र महीपाल के सभासद् होकर रहे। इन्हीं के आदेश से 'बालभारत' या 'प्रचण्डपाण्डव' का अभिनय किया गया। इन राजाओं के समकीलीन होने से इनका समय नवम का अन्त तथा दशम शताब्दी का आरम्भ मानना उचित होगा लगभग (880 ई0 920 ई0)

---

1. बालरामायण 1/18

राजशेखर का पाण्डित्य काव्यक्षेत्र में बहुत बढ़ा चढ़ा था। वे अपने को वाल्मीकि, भर्तृमेण्ठ और भवभूति का अवतार मानते हैं। इससे स्पष्ट है कि राजशेखर ने भवभूति के नाटकों का ही अध्ययन नहीं किया था, अपितु वाल्मीकि के रामायण तथा भर्तृमेण्ठ के हयग्रीव-वध का भी गाढ़ अनुशीलन किया था। राजशेखर की प्रतिभा महाकाव्य की रचना के लिये जितनी उपयुक्त थी, नाटकनिर्माण के लिए वह उतीन अनुरूप नहीं थी। उक्त महाकाव्य रचयिताओं के प्रति समधिक आदर दिखलाने का भी यही रहस्य है। इन्होंने अपने को कविराज कहा है। ये भूगोल के बड़े भारी ज्ञाता थे। भारत के प्राचीन भूगोल की अनुपम सामग्री काव्यमीमांसा में भरी पड़ी है। इन्होंने इस विषय पर भुवनकोष नामक ग्रन्थ भी बनाया था, जो आजकल उपलब्ध नहीं होता। बालरामायण का दशम अंक भौगोलिक वर्णन के सर्वथा परिपूर्ण है।

काव्यमीमांसा के अनुसार कवि की दश अवस्थाओं में महाकवि के पद से बढ़कर कविराज का पद स्वीकृत किया गया है। जो केवल एक प्रकार के प्रबन्ध में प्रवीण होता है वह महाकवि कहलाता है, परन्तु कविराज की कोटि इससे एक सीढ़ी बढ़कर है। जो सब भाषाओं में, सब प्रबन्धों में और भिन्न-भिन्न रसों में रचनागत नैपुण्य रखता है, कविराज कहा जाता है। संसार में ऐसे प्रसिद्ध कविराज विरले होते हैं। राजशेखर वस्तुतः कविराज थे। संस्कृत, प्राकृत, पैशाची तथा अपभ्रंश भाषाओं में इनकी अबाध गति थी तथा इन भाषाओं में इनकी ललित लेखनी कमनीय कविता की सृष्टि करती थी। राजशेखर का बहुभाषाविज्ञान एक विलक्षण वस्तु है जिसे उन्होंने स्वयं इस प्रकार प्रकट किया है :--

गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम्।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे
निबद्धा यस्त्वेषां स खलु निखिलेऽस्मिन् कविवृषा॥

राजशेखर ने स्वयं अपने षट्प्रबन्धों का निर्देश किया है। इन प्रबन्धों में पांच उपलब्ध हैं तथा प्रकाशित हुए हैं। हरविलास उपलब्ध नहीं है। काव्य-मीमांसा का सम्बन्ध अलंकारशास्त्र से है।

1. बालरामायण - इसमें दश विशालकाय अंकों में राम की कथा को भव्य नाटक का रूप दिया गया है।

2. बालभारत (या प्रचण्ड-पाण्डव) - महाभारत की कथा का विराट् नाटकीय रूप है। परन्तु इसके केवल आरम्भ के दो ही अंक उपलब्ध होते हैं।

3. विद्धशालभंजिका - यह चार अंक की सुन्दर नाटिका है।

4. कर्पूरमंजरी -- यह भी चार जवनिका वाली नाटिका है, परन्तु केवल प्राकृतभाषा में निबद्ध

